# परिहरणीयाः प्रमादादयः

नित्यं क्रोधात् श्रियं रक्षेत् तपो रक्षेच्च मत्सरात् ।
विद्यां मानापमानाभ्याम् आत्मानं तु प्रमादतः ।।

*- स्कन्दपुराणम्*

''क्रोधात् ऐश्वर्यं रक्षणीयम् । असूयातः तपः रक्षणीयम् । मानात् अपमानात् च विद्या रक्षणीया । प्रमादतः, स्खालित्यात् स्वस्य रक्षणं करणीयम्'' इति वदति एषः पुराणश्लोकः ।

लोके धनसङ्ग्रहः कथं भवति ? अन्याय्यः मार्गः आश्रितः चेत् उत्कोचस्वीकरण-वञ्चनादितः अल्पे एव काले धनं सम्पाद्येत । किन्तु एषः मार्गः निन्द्यः । न्याय्येन मार्गेण धनं सङ्ग्रहणीयं चेत् प्रथमं लोकसङ्ग्रहः करणीयः । यत्र क्रोधशीलता भवति तत्र जनसङ्ग्रहः न भवति, ततः धनसङ्ग्रहः अपि न भवति । सङ्गृहीतस्य धनस्य रक्षणार्थम् अपि अक्रोधः आवश्यकः एव । क्रोधशीलस्य समीपं न हि याचकाः आगच्छन्ति, न वा आत्मीयाः । एवं दाने भोगे वा क्रोधः एव प्रतिबन्धकः भवति ।

'तपो रक्षेत् च मत्सरात्' इति द्वितीयं वचनम् । न हि आधुनिके काले तपः दृश्यते । किन्तु महता श्रमेण रक्षणीयं चारित्र्यं तु अस्ति एव । अतः मत्सरादिगुणतः चारित्र्यं रक्षणीयम् । मत्सरादयः गुणाः मानवं अन्याय्यमार्गे प्रवर्तयन्ति । अतः ते प्रयत्नेन दूरे स्थापनीयाः ।

विद्या तु अपमानतः नश्यति इति तु सुस्पष्टम् । अपमानितः कश्चित् विद्यायाः रक्षणे वर्धने वा न प्रवर्तते । मानः अपि विद्यायाः नाशकः इति वदति पुराणकारः । प्रसिद्धिः मतिं कलुषीकरोति एव खलु ? कलुषितमतयः किं विद्यायाः रक्षणे वर्धने च प्रवर्तेरन् ? न खलु ? गर्विताः ते आत्मानं श्रेष्ठं भावयन्तः, आत्मानं सर्वज्ञं भावयन्तः व्यवहरन्ति । तदा विद्या सहजतया ततः दूरं गच्छति ।

व्यवहार-वचन-चिन्तनादिषु स्खालित्यम् आत्मानः हानिं जनयति । अतः प्रगतिम् इच्छता मानवेन सर्वविधाः प्रमादाः यत्नतः परिहरणीयाः ।

# नामनिर्वचनम् - २४

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विवक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते ।]*

**अरुणः** - i) ऋच्छति = गच्छति इति अरुणः । [ऋ (गतौ) + उनन्] अरुणः नाम सूर्यः । सूर्यस्य नियतगतिः प्रसिद्धा एव खलु । अतः निरन्तरं यः गच्छति सः अरुणः ।

ii) कृष्णमिश्रितरक्तविशिष्टः अपि अरुणः इति उच्यते । तथा हि अमरमालाकोषः - 'अरुणः कृष्णलोहितः ।' प्रयोगः यथा रामायणे - 'कपोताङ्गारुणो धूमः दृश्यते विमलाम्बरे' ।

iii) अरुणः वर्णः अस्य अस्ति इति अरुणः । [ अरुण + अच् ] अरुणवर्णयुक्तः यः भवति सः अरुणः । सूर्यस्य रथस्य सारथिः अरुणः इति प्रसिद्धः । अरुणशब्दस्य पूर्वोक्ताः त्रयः अर्थाः सुप्रसिद्धाः । निःशब्दः, कपिलः, कुष्ठरोगविशेषः इत्यादयः अन्ये अपि अर्थाः सन्ति एतस्य परस्य । तथा हि कोषः - ''अरुणोऽव्यक्तरागेऽर्के सन्ध्यारागेऽर्कसारथौ । निश्शब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु । अरुणातिविषाश्यामामञ्जिष्ठात्रिवृतासु च'' (मेदिनी )

**अमरः** - यः न म्रियते सः अमरः । [मृ (प्राणत्यागे) + अच्, नञ्समासः] देवाः अमरत्वेन प्रसिद्धाः । तथाहि अरमकोषः - 'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः' । 'अमरकोषः' इत्येव ख्यातस्य 'नामलिङ्गानुशासन'नामकस्य कोषस्य कर्ता अपि 'अमरः' एव । आदिशाब्दिकेषु अन्यतमः अपि अमरः इति कश्चित् आसीत् । तथा हि कविकल्पद्रुमः - 'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ।।''
अमरशब्दस्य अन्ये अर्थाः यथा - ''अमरस्त्रिदशेऽप्यस्थिसंहारे कुलिशद्रुमे । स्त्री गुडूच्यमरावत्योः स्थूणादूर्वाजरायुषु ।।''

**नरेन्द्रः** - नरः इन्द्रः इव, नराणाम् इन्द्रः वा । [नर + इन्द्र] मानवेषु श्रेष्ठः इति नरेन्द्रपदस्य अर्थः । नरेन्द्रः = राजा । नरेन्द्राणां (राज्ञां) श्रेष्ठत्वम् एवं वर्णयति मनुस्मृतिः -
''रक्षणात् आर्यवृत्तानां कण्टकानां च शोधनात् ।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ।।
नरेन्द्रपदस्य विषवैद्यः, वृक्षविशेषः, छन्दोविशेषः इत्यादयः अन्ये अपि केचन अप्रसिद्धाः अर्थाः सन्ति एव ।

**सूचना** - *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।*

**सङ्केतः** -संस्कृतचन्दमामा, 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु - ५६० ०८५.



# चन्दमामा

मे -१९९७



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००




# चन्दमामा

संस्थापकः - **'चक्रपाणिः'** सञ्चालकः - **'नागिरेड्डी'**

## स्वोद्योगावकाशार्थं प्रयत्नः भवतु

मेमासः विरामकालः छात्राणाम् । परीक्षाः समाप्तिं गताः सन्ति । पाठ्यपुस्तकानि टिप्पणीपुस्तकानि च कपाटिकायां स्थापिताः सन्ति । वर्षं यावत् ये विद्यालयं महाविद्यालयं वा गतवन्तः ते सर्वे इदानीं विरामसुखम् अनुभवन्तः सन्ति । किं सर्वेषां बालकानाम् एषा एव स्थितिः ?

ये प्रौढशालास्तरं कनीयविद्यालयस्तरं वा अतिक्रान्तवन्तः तान् प्रायः बाधते चिन्ता । यतः महाविद्यालयेषु प्रवेशः न सुलभः । प्रवेशावकाशाः तत्र अल्पाः । स्थितेषु महाविद्यालयेषु अवकाशस्य वर्धनं नूतनविद्यालयस्य आरम्भः वा न सुकरः । किन्तु विद्यालयस्य अन्तिमवर्षपरीक्षायाम् उत्तीर्णतां प्राप्नुवतां सङ्ख्या वर्षे वर्षे वर्धते । एवम् उत्तीर्णतां प्राप्तवन्तः किं वा कुर्युः ? कुत्र वा गच्छेयुः ?

छात्रेषु सर्वे वैद्यकीयविद्याम् आभियान्त्रिकविद्यां, सङ्गणकयन्त्रविद्यां वा अध्येतुं न अर्हन्ति । सर्वाः विद्यासंस्थाः प्राप्ताङ्कान् आधारीकृत्य प्रवेशं यच्छन्ति । सामान्याङ्कान् प्राप्तवन्तः छात्राः अत्र प्रवेशार्हाः न भवन्ति । एतद्विषये वयं विद्यासंस्थाः अधिक्षेप्तुं न शक्नुमः । यतः प्रवेशं प्राप्तवन्तः छात्राः विद्यालयकीर्तिं वर्धयेयुः इति ताः यत् निरीक्षन्ते तत्र न किमपि खलु अनौचित्यम् ?

अतः एव 'उद्योगविषये मार्गदर्शनम्' एतेषु दिनेषु विशेषप्रसिद्धिं गतम् अस्ति । तादृशमार्गदर्शयितारः चित्ताकर्षकरीत्या स्वपाठ्यक्रमादिकम् उपस्थापयन्ति छात्राणां पुरतः । वस्तुतः सर्वेषां लक्ष्यं किम् ? उत्तमस्य कस्यचित् उद्योगस्य प्राप्तिः एव खलु ? तदर्थम् अपि महती स्पर्धा सम्मुखीकरणीया भवति ।

प्रायः सर्वे छात्राः विस्मरन्ति एव यत् अनन्ताः स्वोद्योगावकाशाः सन्ति इति । किमर्थं वा स्वयंस्वामित्वं न प्राप्तव्यम् ? किमर्थम् अन्यस्य सेवा एव करणीया ? अतः एव एतेषु वृत्तिशिक्षणस्य प्राधान्यम् आगतम् अस्ति । बह्व्यः संस्थाः विविधवृत्तीनां शिक्षणे निरताः दृश्यते । सौभाग्यस्य विषयः नाम सर्वकाराः एतादृशप्रयत्नान् अभिजानन्तः अङ्गीकुर्वन्तः च अर्हाणां साहाय्यम् आचरन्तः सन्ति इति ।

सम्पुटः - १४ मे - १९९७ सञ्चिका - २

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | |
|---|---|---|
| अङ्कुरः | - | sprouts |
| अपनेतुम् | - | to take away |
| अभियोगः | - | complaint |
| अर्बुदरोगः | - | cancer |
| आयः | - | income |
| उत्खननम् | - | excavation |
| उत्प्लुत्य | - | having jumped |
| उन्मूलनम् | - | plucking |
| उपत्यका | - | level ground along the foot of a mountain |
| उपेक्षा | - | neglect |
| ऊर्णम् | - | wool |
| ऋत्विक् | - | a man of priestly |
| औद्धत्यम् | - | qualities arrogance |
| कुल्या | - | canal |
| क्षिप्तः | - | discarded |
| क्षुतम् | - | sneeze |
| खलीनम् | - | reins |
| गुञ्जा | - | seed |
| धिक्कृतिः | - | condemnation |
| नाडी | - | blood wessel |
| निपीड्य | - | having squeezed |
| निरोद्धुम् | - | to suppress |
| परिवृत्य | - | about turn |
| पूगीफलम् | - | aracanut |
| प्रतिभूत्वम् | - | bail |
| प्रायोप्रवेशः | - | seeking deth by abstaining from food. |
| मुद्गरः | - | hammer |
| विज्ञप्तिः | - | submission |
| विदारणम् | - | splitting |
| विमुक्तः | - | independent |
| विवृत्य | - | having describe |
| व्यामुग्धः | - | to be in-fatuated |
| शीतला | - | small pox |
| शूलारोपणम् | - | to be hanged |
| सशपथम् | - | with promise |
| सुचारुरीत्या | - | beautifully |
| सूचीसदृशी | - | needle like |
| स्फुटीभवति | - | gets clear |
| स्मारकम् | - | memorial |
| हरीतकी | - | yellow myrobalan tree |

* * *

वार्ताविशेषः -

# बाङ्ग्लादेशस्य राष्ट्रपिता

बाङ्ग्लादेशः स्वनिर्मितेः पञ्चविंशतितमं वर्षं रजतोत्सववर्षत्वेन आचरितवान् अस्ति। ततः मासद्वयानन्तरं तेन उद्घोषितम् अस्ति यत् बाङ्ग्लादेशस्य रचनार्थं विशेषपरिश्रमं कृतवान् षेक् मुजिबुर्-रेहमान्वर्यः 'राष्ट्रपिता' अस्ति इति। पूर्वं पूर्वपाकिस्थाननाम्ना पाकिस्थानस्य अङ्गत्वेन स्थितस्य भूभागस्य स्वतन्त्रताकल्पनार्थं विशेषपरिश्रमं कृत्वा जगद्विख्यातः जातः आसीत् सः । १९४७तमे वर्षे भारतं यदा स्वतन्त्रं जातं तदा मुसल्मानबहुलाः भूभागाः पाकिस्थानाधीनाः जाताः । एवं पूर्वपाकिस्थानप्रदेशः पाकिस्थानस्य अङ्गं जातम् । किन्तु एतस्य प्रदेशस्य जनानाम् आशा आसीत् यत् पाकिस्थानतः विमोचनं प्राप्य 'सोनार् बाङ्ग्ला' निर्मातव्यम् इति ।

किन्तु पाकिस्थानस्य अनुमतं न आसीत् एतत्। अतः सः तस्य भूभागस्य स्वातन्त्र्यार्थं कार्यं कुर्वन्तं 'बङ्गबन्धुः' इति ख्यातं षेक् मुजीबुर्रहमानवर्यम् अन्यान् नायकान् च कारागारे अस्थापयत् । पाकिस्थानस्य शासकानां बहुविधपीडाम् असहमानाः तत्प्रदेशीयाः जनाः पश्चिमबङ्गाल, त्रिपुरा, मेघालयः, अस्साम् इत्यादीन् प्रदेशान् प्रति निराश्रयाः सन्तः आगताः। भारतेन एते सौहार्देन एव स्वागतीकृताः। किन्तु एवम् आगच्छतां सङ्ख्या दिने दिने यदा प्रवृद्धा तदा भारतेन कष्टपरिस्थितिः सम्मुखीकृता । एतस्याः समस्यायाः कोऽपि परिहारमार्गः तेन अन्वेष्टव्यः एव अभवत् । निराश्रयाः स्वस्थानं प्रति प्रेषणीयाः चेत् तत्र आदौ अनुकूलकरी परिस्थितिः निर्मातव्या खलु ? अतः भारतं स्वातन्त्र्यसङ्ग्रामार्थं कार्यं कुर्वद्भिः मिलित्वा तत्प्रदेशस्य स्वतन्त्रताकल्पनार्थं प्रयत्नम् अकरोत् ।

१९७१तमे वर्षे १७ दिनानि यावत् भारत-पाकिस्थानयोः युद्धं प्रवृत्तम् । अन्ते डिसेम्बर्-मासस्य १७ दिनाङ्के पाकिस्थानसैनिकाः शरणम् आगताः । तदा पाकिस्थानात् विमुक्तः पूर्व-पाकिस्थानभूभागः बाङ्ग्लादेशनाम्ना स्वतन्त्रदेशः अभवत् । षेक् मुजीबुर् रेहमान् कारागारात् विमुक्तः जातः । १९७२तमे वर्षे सः बाङ्ग्लादेशस्य अध्यक्षः जातः । किन्तु अगस्ट्मासे ढाकानगरे सपरिवारस्य तस्य हननं कृतम् । तत्काले तस्य पुत्र्यौ जर्मनीदेशे आस्ताम् । अतः ते सजीवं स्थितवत्यौ । तयोः ज्येष्ठा षेक् हसीना वाजेद् १९८१तमे वर्षे इंग्लेण्ड्तः स्वदेशं प्रत्यागत्य राजकीयकृत्येषु निरता अभवत् । पित्रा स्थापितस्य 'अवामी लीग्'नामकस्य नायकत्वं तया प्राप्तम् । १९९६तमे वर्षे जून्मासे प्रवृत्ते निर्वाचने अवामीलीग्पक्षः विजयी जातः । अतः षेक् हसीना बाङ्ग्लादेशस्य प्रधानमन्त्रिणी जाता ।

पूर्वं बाङ्ग्लादेशस्य संविधानस्य चतुर्थविधेः परिष्कारं कृत्वा निर्णीतम् आसीत् यत् षेक्मुजीबुर्रेहमानवर्यः बाङ्ग्लादेशस्य राष्ट्र-पितृत्वेन पुरस्कारणीयः इति । किन्तु १९७९तमे वर्षे बाङ्ग्लादेशः यदा सेनाशासनाधीनः आसीत् तदा एषः परिष्कारः अमान्यः कृतः आसीत् । तथापि तत्र वङ्गबन्धोः षेक् मुजीबुर्रहमानवर्यस्य राष्ट्रपितृत्वेन मान्यता अद्यापि अनुवर्तते । तस्य विषये अगौरवप्रदर्शनं नाम संविधानस्य एव धिक्कृतिः इति बाङ्ग्लादेशस्य लोकसभायाः सभापतिः फेब्रवरीमासस्य १९ दिनाङ्के उक्तवान् अस्ति ।

बाङ्ग्लादेशेन गतस्य डिसेम्बर्मासस्य १६ दिनाङ्के स्वस्य रजतोत्सवः आचरितः । १९७२तमे वर्षे षेक् मुजीबुर्रहमान्वर्यः यत्र देशस्य स्वातन्त्र्यम् उदघोषयत् तस्मिन् स्थले स्मारकस्तूपस्य निर्माणं करणीयम् इति सङ्कल्प्य हसीना-वाजिद्वर्या शङ्कुस्थापनं कृतवती अस्ति ।




तस्मिन् दिने अस्माकं देशे 'विजयोत्सवः' आचरितः । तस्मिन् दिने राष्ट्रपतिः डा. शङ्करदयालशर्मा सैनिकवन्दनां स्वीकृतवान्




# सद्बुद्धिगुलिका

अच्युतः, अनन्तः, गोविन्दः च सहोदराः । पितुः मरणानन्तरं ते स्वकीयं विशालं गृहं त्रिधा विभज्य स्वकीये भागे वसन्तः जीवनं यापयन्ति स्म । एवमेव बहूनि दिनानि अतीतानि ।

एकस्मिन् दिने कश्चित् विरागी तस्य गृहस्य पुरतः स्थित्वा 'भिक्षां देहि' इति प्रार्थितवान् ।

तदा ते सहोदराः पार्श्वग्रामं गतवन्तः आसन् । तेषां पत्न्यः एकत्र उपविश्य जल्पने मग्नाः आसन् । तस्य ध्वनिं श्रुत्वा - ''कश्चित् नूतनभिक्षुकः स्यात् एषः । अन्यथा एतस्य गृहस्य पुरतः स्थित्वा भिक्षां याचितवान् न स्यात्'' इति परस्परम् उक्तवत्यः ।

अत्रान्तरे विरागी पुनरेकवारं 'भिक्षां देहि' इति उक्तवान् । तिस्रः स्नुषाः युगपत् बहिः आगत्य तं दृष्ट्वा - ''एतत् गृहं कस्य इति न जानाति वा भवान् ? अत्र भिक्षा न लभ्यते'' इति उक्तवत्यः ।

एतत् श्रुत्वा विरगी उक्तवान् - ''अहं कः इति अज्ञात्वा भवत्यः एवं वदन्त्यः सन्ति । सर्वेषु गृहेषु मया भिक्षा न याच्यते । अद्य भवतीनां सौभाग्यम् । अतः एव अहं भिक्षायाचनार्थम् अत्र आगतवान् अस्मि । मह्यं भिक्षा दीयते चेत् विशेषलाभः भविष्यति'' इति ।

''कीदृशः लाभः दाप्यते भवता?'' इति पृष्टवत्यः ताः ।

''भवतां गृहस्य पृष्ठभागे निधिः कथं लभ्यते इति उपायं वदामि'' इति उक्तवान् विरागी ।

'निधिः' इति शब्दं श्रुत्वा तासु सहोदरीषु आशा उत्पन्ना । ताः अहमहमिकया तस्मै भिक्षां दातुम् उद्युक्ताः अभवन् ।

तदा विरागी - ''एतानि गृहाणि

'श्रीमाता'

सहोदराणाम् इति कारणतः भवत्यः तिस्रः अपि समानाः एव । अतः एकस्मिन् गृहे अन्नम्, अन्यस्मिन् गृहे व्यञ्जनम्, अपरस्मिन् गृहे क्वथितं च सज्जीक्रियताम् । तिस्रः अपि मिलित्वा मह्यं पूर्णोदरं भोजनं यच्छन्तु । अनन्तरं निधिं प्राप्तुम् उपायं सूचयिष्यामि'' इति उक्तवान् ।



अनन्तरं यथा विरागी तृप्तः भवेत् तथा भोजितवत्यः ताः । तदा तृप्त्या विरागी उद्गिरणं कुर्वन् - ''बहु सन्तोषः । भवत्यः गत्वा पतिम् 'एकैकम् उत्तमकार्यं करणीयम्' इति वदन्तु । यः अन्येषाम् उपकारं कृत्वा स्वभागस्य वाटिकायां यत्र खननं करोति तत्र सः निधिं प्राप्नोति । अहम् इतोऽपि दिनत्रयं यावत् एतस्मिन् ग्रामे एव भविष्यामि । मम वचनानुसारं यदि न भविष्यति तर्हि मम समीपम् आगच्छन्तु'' इति उक्तवान् ।

एतत् वचनं श्रुत्वा सहोदरीणां मुखानि म्लानानि जातानि । तासां भयं ज्ञात्वा विरागी 'कारणं किम्' इति आश्चर्येण पृष्टवान् ।

''सहोदराः ते सर्वे समानाः एव । परोपकारबुद्धिः किञ्चिदपि नास्ति तेषु । अतः तैः एकमपि उत्तमकार्यं कारयितुं न शक्यते । वस्तुतः भवता अद्य भोजनम् अत्र कृतम् इति यदि तैः ज्ञायेत तर्हि ते कुपिताः भवेयुः । ते नगरे न सन्ति इति कारणतः एव एतत् साहसं वयं कृतवत्यः'' इति उक्तवती ज्येष्ठस्नुषा ।

विरागी किञ्चित् विचिन्त्य - ''मम समीपे सद्बुद्धिगुलिकाः सन्ति । अहं तिसृभ्यः अपि एकैकं ददामि । तां गुलिकां रात्रौ शयनात् पूर्वं जलेन द्रवीकृत्य स्वपतये दीयताम् । प्रातः उत्थानात् पूर्वं तेषु सद्बुद्धिः उत्पन्ना भविष्यति । तस्याः गुलिकायाः प्रभावः अनन्तरदिने सूर्यास्त-पर्यन्तं भविष्यति'' इति उक्त्वा गतवान् ।

तस्मिन् दिने रात्रौ सहोदराणाम् आगमनानन्तरं ताः गुलिकां द्रवीकृत्य दत्तवत्यः ।

अनन्तरदिने प्रातः एव अच्युतस्य जागरणम् अभवत् । यदा सः उत्थाय बहिः आगतवान् तदा तेन स्वगृहस्य पुरतः केचन सैनिकाः शङ्करश्च दृष्टाः । शङ्करः रुदन् अस्ति इति ज्ञात्वा - ''किम् अभवत् शङ्कर ?'' इति विचारितवान् अच्युतः ।

तदा सैनिकाः अच्युतम् उद्दिश्य - ''एषः



सर्वेभ्यः ऋणं स्वीकृत्य गृहं, क्षेत्रं च क्रीतवान् अस्ति । गृहं पत्न्याः नाम्ना अस्ति । क्षेत्रं पुत्राणां नाम्ना अस्ति । ऋणं प्रतिदातुम् इदानीम् एतस्य समीपे किमपि नास्ति । ऋणदातारः न्यायालये अभियोगं कृतवन्तः सन्ति । वयम् एतं कारगृहे स्थापयितुं नयन्तः स्मः'' इति उक्तवन्तः ।

''एषः कारागृहे भवति चेत् कथं वा ऋणं प्रतिदातुं शक्नुयात् ? यदि बहिः भवेत् तर्हि कथञ्चित् वा ऋणमुक्तः भवितुं शक्नुयात् खलु ?'' इति उक्तवान् अच्युतः ।

''यः ऋणं कृतवान् सः यदि कारागारवासं न इच्छति तर्हि तेन झटिति ऋणं प्रत्यर्पणीयम् । एतस्य तु तादृशं सामर्थ्यं नास्ति । तेन शतरूप्यकाणाम् ऋणं यत् प्रत्यर्पणीयं तावत् धनं न्यायालयाय दत्त्वा यदि कश्चित् प्रतिभूत्वम् अङ्गीकुर्यात् तर्हि अपि एषः कारागारवासात् मुक्तः भवेत् । प्रतिभूत्वं दातुम् एतस्य पत्नी पुत्राः वा सिद्धाः न सन्ति । अतः कारागारवासात् ऋते एतस्य न अन्या गतिः'' इति उक्तवन्तः भटाः ।

अनुक्षणम् अच्युतः - ''महोदय ! केवलानां शतरूप्यकाणां निमित्तम् अस्माकं ग्रामस्य कश्चित् कारागारं गच्छेत् वा ? न, सर्वथा न । अन्याय्यम् एतत् । आदौ एतं त्यजन्तु तावत् । धनं तु अहं ददामि'' इति उक्त्वा गृहतः धनम् आनीय दत्त्वा उक्तवान् - ''वृषभद्वयं क्रेतुम् एतावत् धनं सङ्गृहीतवान् आसम् । ह्यः विपण्याम् उत्तमवृषभौ न लब्धौ । सर्वमपि शङ्करस्य सौभाग्यम्'' इति उक्तवान् ।

सैनिकाः शङ्करं त्यक्त्वा गतवन्तः । अनन्तरम् अच्युतः शङ्करं, तस्य पत्नी-पुत्रान्, ऋणदातॄन् च एकत्र मेलयित्वा हितवचनानि उक्तवान् । शङ्करस्य पत्नी पुत्राश्च आत्मना कृतम् अपराधम् अवगच्छन्तः लज्जाम् अनुभवन्तः 'ऋणं प्रतिदद्मः' इति लिखित्वा दत्तवन्तः । प्रतिभूत्वसम्बद्धं धनम् अच्युताय प्रत्यर्पितवन्तः च ।

ततः शङ्करस्य पत्नी अच्युतम् उद्दिश्य - ''श्रीमन् ! भवतः मम पत्युः च विरोधः अनेकवर्षेभ्यः अस्ति । तत्र मम पत्युः एव दोषः अधिकः इत्यपि अहं जानामि । तादृशस्य मम पत्युः महत् साहाय्यं कृतवान् अस्ति भवान् । पत्युः कारागृहगमनं दृष्ट्वा अपि वयं तूष्णीं स्थितवन्तः इत्यतः

अस्मद्विषये असमीचीनः अभिप्रायः स्यात् भवतः । परन्तु वस्तुस्थितिः अन्या एव अस्ति । 'कारागृहं वा गच्छेयं किन्तु ऋणं तु न प्रतिदद्याम्' इति मम पतिः वदन् आसीत् । अतः एव एवं प्रवृत्तम् । शत्रोः अपि साहाय्यं कुर्वतः भवतः उत्तमगुणं दृष्ट्वा मम पतिः अपि परिवृत्तः जातः । किन्तु भवता महत् कष्टम् अनुभूतम् । एतदर्थं वयं क्षन्तव्याः'' इति उक्तवती ।



शङ्करः अपि - ''पूर्वं प्रवृत्तं सर्वं विस्मृत्य इतःपरं स्नेहेनैव जीवनं करवाम'' इति अच्युतम् उक्तवान् । अच्युतः अपि सन्तोषेण गृहं गतवान् ।

तस्मिन् दिने अनन्तेन अपि अन्येषां साहाय्यं कर्तुम् एकः अवकाशः प्राप्तः । सः अधिकबलशाली आसीत् । पुरतः गृहे कूपखननसमये एका महती शिला प्राप्ता आसीत् । कथञ्चित् अपि तां शिलां भग्नां कर्तुं न शक्तवन्तः आसन् कर्मकराः । 'भीमबलः कश्चित् बलेन तां शिलां मुद्गरेण ताडयति चेत् सा भग्ना भवेत्' इति केषाञ्चन अभिप्रायः आसीत् । एषः विषयः अनन्तेन अपि ज्ञातः । परन्तु तेन विपणिं प्रति अनुक्षणं गन्तव्यम् आसीत् । तस्य समीपे नारिकेलफलानि आसन् । 'अद्य विपण्याम् उत्तममूल्येन एतानि विक्रीतानि भवन्ति' इति कश्चित् उक्तवान् आसीत् । अनुक्षणं यदि विपणिं प्रति नारिकेलानि न नीयन्ते तर्हि लाभप्राप्त्यवकाशः नष्टः भवेत् ।

इदानीं पुरतः स्थितस्य गृहस्य समस्या अपि न उपेक्षार्हा । तत्र चत्वारः कार्यं कुर्वन्ति स्म । दिनद्वयादारभ्य कूपस्य खननं कुर्वन्तः आसन् ते । अद्य तस्य कार्यस्य स्थगनं यदि भवेत् तर्हि कर्मकरेभ्यः दीयमानं वेतनं व्यर्थं भवेत् । अन्यच्च उपरिभागे स्थितायाः मृत्तिकायाः पतनात् कृतं कूपखननकार्यम् अपि व्यर्थं भवेत् । ततः एतावत्पर्यन्तं कृतः व्ययः निरुपयोगी स्यात् । एतत्सर्वं स्मरन्ती प्रतिवेशिनी दिग्भ्रान्ता जाता आसीत् ।

एतं विषयं ज्ञात्वा शङ्करः तत्र गतवान् । यदा सः बलात् खनित्रेण ताडितवान् तदा शिलाखण्डः द्विधा भग्नः जातः । अनुक्षणं कूपात् जलम् आगतम् । तदनन्तरं सः नारिकेलफलानि स्वीकृत्य विपणिं गतवान् । तत्र तेषां विक्रयणेन यथायोग्यं लाभमपि सम्पादितवान् ।

गोविन्देन अपि परोपकारकरणार्थम्



अवकाशः लब्धः । तस्मिन् ग्रामे ईश्वरः नाम कश्चन कर्मकरः आसीत् । सः सर्पेण दष्टः । पार्श्वग्रामस्थः पण्डितः औषधं दत्त्वा ''एतस्य प्राणाः यथा न गच्छेयुः तथा एतत् औषधं तात्कालिकतया रक्षति । एक-दिनाभ्यन्तरे एतस्मै सर्पगन्धलेह्यं दातव्यम् अस्ति । न दीयते चेत् एतस्य पादद्वयमपि उपयोगायोग्यं भविष्यति । ततः तद् पादद्वयं पुनः कदापि सम्यक् कारयितुं न शक्यते'' इति उक्तवान् ।

सर्पगन्धलेह्यं नगरे स्थितस्य शेषाद्रिनामकस्य वैद्यस्य समीपे असीत् । सामान्यतः पादाभ्यां नगरं गत्वा आगन्तुम् सार्धैकदिनम् अपेक्षितम् । तस्मात् पूर्वम् ईश्वरस्य दुर्गतिः एव भवेत् ।

तस्य ग्रामस्य प्रमुखस्य समीपे कश्चित् उत्तमजातीयः अश्वः आसीत् । किन्तु तस्य अश्वस्य आरोहकः विरामं स्वीकृत्य श्वशुर-गृहं गतवान् आसीत् । इदानीं तेन अश्वेन गन्तुं गोविन्दः एकः एव समर्थः । परन्तु मासात् पूर्वं गोविन्दः महत्याः उदरवेदनातः मुक्तः जातः आसीत् । तदा वैद्यः सूचितवान् आसीत् यत् सप्तवर्षपर्यन्तं वेगेन धावनं, चलनम्, अश्वारोहणं च न करणीयम् इति ।

ईश्वरस्य प्राणाः कथञ्चित् रक्षणीयाः एव इति विचिन्त्य गोविन्दः वैद्यसूचनां तृणीकृत्य तम् अश्वे आरोप्य नगरं गत्वा शेषाद्रिवैद्यस्य समीपं नीतवान् । वैद्यः ईश्वराय सर्पगन्धिलेह्यं दत्तवान् । गोविन्दस्य परोपकारबुद्धिं बहुमन्यमानः वैद्यः तस्मै 'कायकल्प'नामकम् औषधं दत्तवान् । ततः तं सूचितवान् यत् इतःपरं भवान् आदिनम् अश्वेन प्रयाणं करोति चेत् अपि भवतः कोऽपि क्लेशः न भविष्यति इति ।

एवम् ईश्वरस्य विकलाङ्गतायाः मुक्तेः निमित्तं साहाय्यं कृतवन्तं गोविन्दं ग्रामजनाः सर्वे बहुधा श्लाघितवन्तः ।

स्वपतिः सत्कार्यं कृतवान् इति तिस्रः अपि स्नुषाः महान्तं सन्तोषम् अनुभूतवत्यः । विरागिणः वचनानुसारम् अनन्तरदिने सहोदराः स्ववाटिकायां खननं कृतवन्तः । तदा ताम्रनाणकैः पूर्णः ताम्रघटः गोविन्देन लब्धः । रजतनाणकैः पूर्णः रजतघटः अनन्तेन लब्धः । सुवर्णनाणकैः पूर्णः सुवर्णघटः अच्युतेन प्राप्तः ।

एतत् दृष्ट्वा अनन्तस्य पत्नी, गोविन्दस्य पत्नी च दुःखिते जाते । ते द्वे विरागिणः

समीपं गतवत्यौ । गोविन्दस्य पत्नी प्रवृत्तं सर्वम् उक्त्वा - "त्रयः अपि उत्तमकार्यं कृतवन्तः । त्रिभिः अपि भवतः कारणतः एव समृद्धिः प्राप्ता । किन्तु तत्र एकरूपता न आसीत् । किमर्थम् एवं फले भेदः सञ्जातः ?" इति पृष्टवती ।

"मम गुलिका केवलां तात्कालिक-सद्बुद्धिं जनयति । फलं तु व्यक्तेः मूलबुद्धिम् अनुसृत्य एव भवति" इति उक्तवान् विरागी ।

"त्रयाणां सहोदराणां बुद्धिः अपि समाना एव आसीत् खलु ?" इति उक्तवती अनन्तस्य पत्नी ।

तदा संन्यासी उक्तवान् - "यद्यपि बाह्यदर्शनात् तथा भासते, तथापि वस्तुस्थितिः अन्या एव । गोविन्दः एकम् उत्तमकार्यं कृत्वा एकस्य मनुष्यस्य प्राणान् रक्षितवान् । परन्तु यदा मम गुलिकायाः प्रभावः न्यूनः जातः तदा सः कृतस्य उत्तमकार्यस्य विषये विचिन्त्य - 'पुनः कदापि एवं न करणीयम्' इति निर्णीतवान् अस्ति । अतः स्वस्य श्रमानुसारं तेनं ताम्रनाणकानि प्राप्तानि सन्ति । अनन्तः उत्तमकार्यं कृत्वा - 'आदिनं वृथा समययापनम् उत्तमं न । कदाचित् एव उत्तमकार्यं करणीयम्' इति चिन्तितवान् अस्ति । अतः तेन रजतनाणकानि प्राप्तानि सन्ति । अच्युतः उत्तमकार्यकरणानन्तरं महान्तं सन्तोषम् अनुभूतवान् अस्ति । 'इतः परम् एवम् एव उत्तमकार्यं करणीयम्' इति निर्णीतवान् अस्ति अपि सः । अतः तेन सुवर्णनाणकानि प्राप्तानि" इति ।

यदा ते स्वगृहं प्रविष्टवत्यौ तदा अनन्तः गोविन्दः च स्वपत्न्याः कृते सुवर्णनाणकानि दर्शयन्तौ - "एतस्मिन् गृहे यत् लभ्यते तत्र सर्वेषाम् अपि समानभागः भवेत् इति अच्युतः उक्तवान् इति । तदर्थं सः आत्मना लब्धं सुवर्णं विभज्य दत्तवान् । आवयोः द्वारा रजत-ताम्रनाणकानां विभागं कारितवान् च" इति उक्तवन्तौ ।

'त्रिषु सहोदरेषु शाश्वतसद्बुद्धिं अच्युतः एकः एव प्राप्तवान् । तत्तस्य स्वभावस्य अनुगुणम् एव संन्यासी अनुग्रहं कृतवान् अस्ति । अतः आवयोः पतिभ्यां यत् प्राप्तं तत् युक्तम् एव' इति अवगतवत्यौ अनन्त-गोविन्दयोः पत्न्यौ ।



# प्रोत्साहकं पारितोषिकम्

ब्रह्मपुरे प्रतिवर्षम् अपि चित्रलेखनस्पर्धा प्रचलति स्म । देशविदेशेभ्यः समागताः कलाकाराः तत्र भागं वहन्ति स्म । स्पर्धायां विजेतारः अमूल्यानि उपायनानि प्राप्नुवन्ति स्म । एतस्यां स्पर्धायां भागग्रहणम् एव गौरवकारकम् इति भावयन्ति स्म कलाकाराः ।

कदाचित् मणिपुरनिवासी विश्वासः नाम युवकः एतस्यां स्पर्धायां भागं गृहीतवान् । यथापूर्वम् एतस्यां स्पर्धायां नानाभागेभ्यः समागताः कलाकाराः भागं गृहीतवन्तः आसन् एव ।

स्पर्धां समाप्य प्रतिगच्छन्तं विश्वासं स्नेहिताः पृष्टवन्तः - ''भवता पारितोषिकं किमपि प्राप्तं वा ?'' इति ।

''आम् । प्रोत्साहकं पारितोषिकं प्राप्तम्'' इति निरुत्साहेन उक्तवान् विश्वासः ।

तदा स्नेहिताः उक्तवन्तः - ''भोः, एतस्यां स्पर्धायां प्रोत्साहकपारितोषिकप्राप्तिः अपि गौरवास्पदम् एव । एवं स्थिते का एषा निराशा भवतः ? अनुचितम् एतत्'' इति ।

''मम खेदः तदर्थं न । किन्तु पारितोषिकरूपेण यत् पुस्तकं प्राप्तं तत् दृष्ट्वा खिन्नः अस्मि अहम्'' इति उक्तवान् विश्वासः ।

''पारितोषिकरूपेण किं वा पुस्तकं दत्तम् ?'' इति पृष्टवन्तः स्नेहिताः ।

तदा विश्वासः पारितोषिकरूपेण प्राप्तं पुस्तकं प्रदर्शितवान् । पुस्तकस्य नाम आसीत् - 'चित्रलेखनाभ्यासः कथम् आरम्भणीयः ?' इति ।





# सम्राट् अशोकः

## ३

[चन्द्रगुप्तः चाणक्यस्य साहाय्येन नन्दान् पराजित्य मगधराज्यं वशीकृतवान् । पाटलीपुत्रं राजधानीत्वेन परिकल्प्य मौर्यवंशशासनम् आरब्धवान् । तस्य दिवङ्गतेः अनन्तरं तदीयः पुत्रः बिन्दुसारः मौर्यसिंहासनम् आरूढवान् । बिन्दुसारः सुयोग्यक्रमेण राज्यं पालितवान् । तस्य तिस्रः पत्न्यः आसन् । सुभद्रानामिकां ब्राह्मणकन्याम् अपि परिणीतवान् सः । तयोः अशोकः नाम पुत्रः जातः । विद्याविनयसम्पन्नं विवेकिनम् अशोकं दृष्ट्वा ज्येष्ठपुत्रः सुषेणः असूयाम् अनुभवति स्म । तदनन्तरम् ---]

कदाचित् सूर्योदयसमये अशोकः मातुः आदेशं पुरस्कुर्वन् नगरसीमायां स्थितं देवालयं गत्वा फलपुष्पादीनि भगवते समर्प्य प्रत्यागच्छन् आसीत् । पक्षिणां कलरवः तत्र श्रूयते स्म । प्रशान्ते परिसरे देवालयस्य गम्भीरः घण्टानादः अपि श्रूयते स्म । अशोकः प्राकृतिकं सौन्दर्यम् आनन्देन पश्यन् गच्छन् आसीत् । तावता पृष्ठतः कश्चन अश्वः वेगेन अशोकसमीपम् आगतः । सः हठात् अशोकं पातयित्वा अग्रे अगच्छत् । अश्वस्य उपरि युवराजः सुषेणः उपविष्टः आसीत् ।

पतितः अशोकः झटिति उत्थाय शरवेगेन धावन् अश्वसमीपं गत्वा उत्प्लुत्य अश्वस्य उपरि उपविश्य सुषेणहस्तस्थं खलीनं वशीकृत्य आकृष्य अश्वं निगृहीतवान् । अश्वः तत्रैव स्थितः । ततः उभौ अपि अश्वात् अवतीर्णौ ।

''मार्गे गच्छन्तं मां किमर्थं पातितवान् भवान् ?'' इति कोपेन सुषेणं पृष्टवान् अशोकः ।

''भवन्तम् अहं न पातितवान्, अपि तु मम अश्वः पातितवान्'' इति औद्धत्येन उक्त्वा अश्वम् आरोढुम् उद्युक्तः अभवत् सुषेणः ।

अशोकः हस्तग्रहणेन तस्य गमनं निवारयन् - ''निर्जने अपि विशाले मार्गे अश्वचालनं कर्तुम् अजानते भवते को वा अश्वचालनाधिकारं दत्तवान् ?'' इति पृष्टवान् ।

''मम अधिकारविषये पश्नं कर्तुम् अर्हः कः भवान् ? अहं कः इति जानाति खलु भवान् ?'' इति दर्पेण पृष्टवान् सुषेणः ।



''कुतो न ? सर्वथा अप्रयोजकः गर्वितः राजकुमारापसदः भवान् । भवान् मम अग्रजः इत्यतः त्यजामि भवन्तम् । अन्यथा आजन्म भवान् यथा स्मरेत् तथा दण्डनम् अकरिष्यम्'' इति उक्तवान् अशोकः ।

''भाविराजं मां भाययति किम् ?'' इति क्रोधेन पृष्टवान् सुषेणः ।

''भावी राजा कः इति इतोऽपि न निर्णीतम्'' इति उक्तवान् अशोकः ।

''विषयम् अज्ञात्वा मूर्खः इव मा व्यवहरतु । महाराजेन ज्येष्ठैः च एतद्विषये सर्वं निर्णीतम् एव । अहम् एव अस्मि भावी राजा'' इति उक्तवान् सुषेणः गर्वेण हसन् ।

''यः राजा भवितुम् इच्छति तेन सर्वादौ शिष्टव्यवहारः ज्ञातव्यः । तत् आस्तां तावत् । सर्वं निर्णीतम् इति भवतः वचनं मिथ्या । यदि ज्येष्ठैः तथा निर्णीतं स्यात् तर्हि अहं तस्य विरोधं करिष्यामि'' इति उक्तवान् अशोकः ।

''किं महाराजस्य निर्णयस्य एव विरोधः क्रियते भवता ? कियत् औद्धत्यं भवतः ?'' इति वदन् सुषेणः अशोकं ताडयितुम् उद्युक्तः ।

तदा अशोकः तस्य हस्तं निपीड्य गृहीतवान् । ततः विमोचनं प्राप्तुं न शक्तवान् सुषेणः । अतः सः आक्रोशनं कुर्वन् अन्यहस्तेन पादेन च अशोकं प्रहृतवान् । एवं तयोः कलहः आरब्धः । कलहकोलाहलेन देवस्थानपरिसरः व्याप्तः अभवत् । परितः वसन्तः जनाः तत्र सम्मिलिताः ।

राजकुमारौ इदानीं बालौ तु न । चाणक्येन कृतायाः बुद्धिपरीक्षायाः अनन्तरं



सुदीर्घकालः अतीतः अस्ति । चाणक्यः अपि दिवङ्गतः अस्ति । राजा बिन्दुसारः वार्धक्यं प्राप्तवान् अस्ति । अनारोग्यम् अपि तं बाधते स्म । राजकुमारयोः मध्ये वैमनस्यम् अस्ति इति वार्ता देशे सर्वेऽपि जानन्ति स्म । तच्च घोरवैषम्यम् एतावत्पर्यन्तम् एवं प्रकटितं जातं न आसीत् । 'मौर्यवंशस्थापकस्य चन्द्रगुप्तस्य पौत्रौ, सुशीलस्य सद्गुणाश्रयस्य बिन्दुसारस्य पुत्रौ अशोक-सुषेणौ एवं प्रकटरूपेण कलहं कर्तुम् अर्हतः' इति चिन्तनम् एव ऊहातीतम् आसीत् । अतः कोलाहलं श्रुत्वा जनाः बहवः कलहस्थलम् आगताः । सर्वे भयाश्चर्ययुक्तदृष्ट्या मौनेन पश्यन्तः आसन् । कोऽपि कलहस्य निवारणार्थं प्रयत्नं न कृतवान् ।

तावता सौभाग्यवशात् प्रधानमन्त्री भल्लाटकः तत्र आगतः । चाणक्यस्य अनन्तरं भल्लाटकः एव मगधराज्यस्य प्रधानमन्त्रिपदवीम् आरूढवान् आसीत् । तस्य दर्शनात् राजकुमारौ कलहं परित्यज्य पार्श्वे स्थितवन्तौ ।

''मध्येमार्गं सार्वजनिकानां पुरतः भवन्तः एवं कलहं कुरुतः यत् तत् तु महतः दौर्भाग्यस्य विषयः । यदि एषः विषयः भवतोः पित्रा ज्ञायेत तर्हि सः कियन्तं खेदम् अनुभवेत् इति किं भवन्तौ जानीतः ?'' इति खेदमिश्रितस्वरेण उक्तवान् भल्लाटकः ।

अशोकः प्रतिवचनं किमपि न उक्तवान् । किन्तु सुषेणः तु - ''मया कस्मात् अपि भीतिः प्राप्तव्या नास्ति । तदस्तु, मन्त्रिवर्य ! अहम् एव खलु भावी राजा ?'' इति पृष्टवान् ।

''एषः विषयः इतोऽपि न निर्णीतः इति भाति युवराजवर्य । ज्येष्ठेन भवता औदार्येण खलु व्यवहरणीयम् आसीत् ? कः एषः व्यवहारः भवतः ?'' इति उक्तवान् प्रधानमन्त्री ।

''अहं गौरवेण द्रष्टव्यः इति एतम् आज्ञापयन् आसम् । किम् एतत् अनुचितम् ?'' इति पृष्टवान् सुषेणः ।

''वत्स ! उत्तमव्यवहारतः एव गौरवं वर्धिष्यते, न तु आज्ञामात्रेण, अन्यस्य अवमाननेन वा । अल्पस्य कारणस्य निमित्तम् एवं कलहकरणेन जनानाम् उपहासपात्रता प्राप्येत । एतत् उचितं न'' इति बोधितवान् मन्त्री ।

''मया उपहासपात्रता न प्राप्ता । भवतः

आगमनात् एषः दुष्टः प्राणान् रक्षितुं शक्तवान् । अन्यथा एतस्य विदारणम् एव अकरिष्यम् । तदा एषः एव उपहासपात्रताम् अगमिष्यत्'' इति गर्वेण उक्तवान् सुषेणः ।

''युवराज ! अनुजस्य विषये अनादरः न शोभते । यथा भवान्, तथैव सः अपि राज्ञः पुत्रः । सः अपि युवराजः एव । अतः तस्मिन् आदरः भवतु भवतः'' इति बोधितवान् मन्त्री ।

''दास्याः पुत्रस्य युवराजपदवी ! एषः यद्यपि मम पितुः पुत्रः, तथापि एतस्य माता पूर्वं मम मातुः अन्यराज्ञीनां च परिचारिका आसीत् इति तु सत्यम् एव खलु ? दासीपुत्रम् अहं कदापि युवराजत्वेन न अङ्गीकरोमि'' इति उपहासमिश्रितेन स्वरेण उक्तवान् सुषेणः ।



एतत् श्रुत्वा उद्विग्नः अशोकः तं ताडयितुम् उद्युक्तः । तदा मन्त्री तं निवारितवान् ।

''योग्यः युवराजः कः इति कालः एव निर्णेष्यति । मम मातुः अपमाननं यत् कृतं तस्य प्रतीकारम् अहं साधयिष्यामि एव । एषा प्रतिज्ञा मम । प्रधानमन्त्री, अत्र उपस्थिताः जनाः च एतस्य साक्षिणः । मगधसिंहासनं आरोक्ष्यति न भवान्, अपि तु ...'' इति यावत् अशोकः उक्तवान् तावता मन्त्री भल्लाटकः स्वहस्तेन तस्य मुखं पिधाय अग्रिमं कथनं निवारयन् - ''महाराजस्य प्रतिनिधिः सन् अहम् आज्ञापयन् अस्मि । एतत्क्षणे एव भवद्भ्यां राजभवनं प्रति गन्तव्यम्'' इति आज्ञापितवान् । ततः सः परितः स्थितान् जनान् उद्दिश्य - ''सर्वे निर्गच्छन्तु इतः'' इति सूचितवान् ।

जनाः मौनेन ततः निर्गताः । युवराजौ अपि परस्परम् उग्रदृष्ट्या पश्यन्तौ परस्परविरुद्धदिशम् अनुसृतवन्तौ ।

प्रधानमन्त्री स्वगृहं प्राप्य यावत् अश्वात् अवतीर्य मुख्यद्वारसमीपं गतवान् तावता बिन्दुसारस्य ज्येष्ठाप्तमार्गदर्शकः आगत्य नमस्कृत्य - ''महाराजः भवता सह वार्तालापं कर्तुम् इच्छति'' इति निवेदितवान् ।

''एवम् ! गच्छाम तावत्'' इति वदन् मन्त्री तेन सह प्रस्थाय समीपस्थं राजभवनं प्रविष्टवान् । राजा यत्र विश्रान्तिं प्राप्नुवन् आसीत् तं प्रकोष्ठं गतवान् च ।

राजा बिन्दुसारः विशाले प्रकोष्ठे तल्पे शयानः आसीत् । तस्य पुरतः कश्चन



अधिकारी स्थितः आसीत् । मन्त्री तत्र आगत्य राजानं नमस्कृत्य आसने उपविष्टवान् ।

तदा राजा तम् उक्तवान् - "मन्त्रिवर्य ! अद्य काचित् अशुभवार्ता श्रुता मया । तक्षशिलातः आगतः एषः अधिकारी तां वार्तां भवन्तं श्रावयिष्यति" इति ।

अधिकारी मन्त्रिणं नमस्कृत्य उक्तवान् - "मन्त्रिवर्य ! नन्दगुप्तमहाराजः तक्षशिला-राज्यं जित्वा स्वप्रतिनिधिं तत्र नियोजितवान् आसीत् । अद्यावधि तत्र कोऽपि क्लेशः न दृष्टः आसीत् । राज्यशासनं सुचारुरीत्या प्रचलत् आसीत् । किन्तु इदानीं तत्र राजविरोधः उत्पन्नः दृश्यते । मगधराज्यात् पृथग्भवितुं प्रयत्नं कुर्वन्तः सन्ति केचन" इति ।

"एवम् ! आश्चर्यकरी वार्ता एषा !" इति उक्तवान् प्रधानमन्त्री ।

"तक्षशिलाप्रजानां विषये भवद्भिः कोऽपि अपकारः न कृतः । अतः भवन्तः चिन्तयन्ति यत् आश्चर्यकरी वार्ता एषा इति । किन्तु राजप्रतिनिधिः वयं च अत्र आश्चर्यं किमपि न पश्यामः । यतः ग्रीक्जनाः राजविरोधिनां प्रोत्साहनं कुर्वन्तः सन्ति । चन्द्रगुप्ततः प्राप्तः पराजयः तैः इतोऽपि न विस्मृतः । अतः इदानीं ते प्रतीकारं साधयितुम् इच्छन्तः पीडाम् आरब्धवन्तः सन्ति । मगधराज्यं छिन्न-विच्छिन्नं करणीयम् इति तेषाम् इच्छा" इति उक्तवान् अधिकारी ।

"राजविरोधः कीदृशः अस्ति ?" इति पृष्टवान् प्रधानमन्त्री ।

"विरोधिनायकाः प्रकटरूपेण कुत्रापि न दृश्यन्ते । निलीय तिष्ठन्तः ते वणिजः गण्यान् च राजविरोधार्थं प्रोत्साहयन्तः सन्ति । 'अधिकारिणां गृहाणि लुण्ठयित्वा अग्निना दहन्तु' इति सामान्यजनान् प्रेरयन्तः सन्ति ते । प्रजाभिः अस्माकं सैनिकाः बहवः मारिताः । परिस्थितिः दिने दिने विषमतां गच्छन्ती अस्ति" इति उक्तवान् मन्त्री ।

"राजविरोधिनः एतावता एव हिंसाकृत्यम् आरब्धवन्तः सन्ति इत्यतः दण्डोपायात् ऋते न अन्या गतिः इदानीम्" इति स्वगतं वदन् मन्त्री राजानम् उद्दिश्य - "प्रभो, सेनाधिपतिः आज्ञापनीयः यत् तक्षशिलां प्रति गमनार्थं सैन्यं सज्जी-करणीयम् इति" इति सूचितवान् ।

''पूर्वजैः असाधारणेन पराक्रमेण प्रतिष्ठापितं राज्यं मम शासनकाले छिन्न-विच्छिन्नं यथा न भवेत् तथा रक्षणं मम दायित्वम् । प्रवर्तमानं राजविरोधं दृष्ट्वा अपि अहं मौनं स्थातुं न शक्नोमि । अतः अहम् एव ससैन्यं गत्वा तान् दुष्टान् दण्डयिष्यामि'' इति वीरावेशेन उक्तवान् राजा बिन्दुसारः ।

''महाराज ! भवतः चिन्तनं युक्तम् एव। किन्तु एतद्विषये अहं किञ्चित् निवेदयितुम् इच्छामि । भवतः षट् पुत्राः सन्ति । तेषु कश्चित् सैन्याधिपतिः भवतु । पुत्रेण युद्धं कृतं चेत् पित्रा एव कृतम् इव'' इति सूचितवान् मन्त्री ।



''कीदृशी आघातकरी वार्ता एषा ! युवराजस्य सुषेणस्य पट्टाभिषेकः करणीयः इति यावत् अहं चिन्तयन् आसं तावता एषा विपत्तिः आपतिता'' इति खेदेन दीर्घ निश्श्वसन् उक्तवान् बिन्दुसारः ।

''प्रभो, पट्टाभिषेकार्थं किञ्चित्कालं प्रतीक्षा वरम् इति भाति मम । आदौ सुषेणः ससैन्यं गत्वा राजविरोधकृत्यं समूलं निवार्य आगच्छतु नाम । तेन तथा कृतं चेत् तद्विषये प्रजानाम् आदराभिमानादयः वर्धिष्यन्ते'' इति सूचितवान् प्रधानमन्त्री ।

राजा प्रतिवचनं किमपि अवदन् मौनम् आश्रितवान् । तदा मन्त्री एव पुनः उक्तवान् - ''प्रभो ! अल्पा विज्ञप्तिः मम । युवराजम् उद्दिश्य - 'भवान् सेनाधिपत्यं निर्वहतु' इति अस्माकं कथनं युक्तं न भवेत् । सः एव स्वयं तस्मिन् कार्ये यथा प्रवर्तेत तथा करणं वरम् । अतः षड् अपि युवराजान् भवान् आह्वयतु । तक्षशिलायाम् उत्थितं राजविरोधं निवेद्य - 'भवत्सु कश्चित् सेनाधिपत्यं वहतु' इति सूचयाम । सुषेणः ज्येष्ठकुमारः इत्यतः सः स्वयम् एव सेनाधिपत्यं निर्वहेत् । सः मगधराज्यस्य सिंहासनारोहणं चिन्तयन् अस्ति इत्यतः उत्साहेन अत्र प्रवृत्तः भवेत्'' इति ।

बिन्दुसाराय प्रधानमन्त्रिणः एषा सूचना अरोचत । सः मन्त्रिणः सूचनानुसारं कर्तुं सिद्धः जातः । षट् अपि युवराजाः तेन आहूताः । तत्र प्रधानमन्त्रिणं दृष्ट्वा सुषेणः क्षणकालं दिग्भ्रान्तः । 'प्रातः देवालयस्य प्राङ्गणे मम अशोकस्य च यः कलहः प्रवृत्तः तम् एषः महाराजं निवेदितवान् स्यात् वा' इति सन्देहं प्राप्तवान् सः ।

राजा तान् उद्दिश्य उक्तवान् - ''पुत्राः !

भवन्तः इदानीं प्राप्तवयस्काः सन्ति । कर्तव्याकर्तव्यविवेकवन्तः सन्ति भवन्तः । तादृशस्य विवेकस्य परीक्षाकालः सन्निहितः अस्ति इदानीम् । तक्षशिलाप्रदेशे राजविरोधः उत्पन्नः अस्ति इति श्रूयते । तत्र शान्तिसुरक्षिततयोः भङ्गः जातः अस्ति । एषः राजविरोधः उन्मूलनीयः । अतः भवत्सु अन्यतमः ससैन्यं तत्र गत्वा राजविरोधिनः दण्डयित्वा शान्तिं स्थापयित्वा आगच्छेत् । इदानीं वदन्तु - एतत् कार्यं कर्तुं भवत्सु कः सिद्धः अस्ति ?'' इति ।

'झटिति सुषेणः अग्रे आगच्छेत्' इति चिन्तितवान् आसीत् बिन्दुसारः । किन्तु सुषेणः मौनम् आश्रितवान् आसीत् । अन्ये चत्वारः राजकुमाराः अपि मौनेन स्थितवन्तः आसन् । एतत् सर्वं दृष्ट्वा खिन्नः अशोकः किञ्चित् अग्रे आगत्य - ''प्रभो ! भवतः इङ्गितं शिरोधार्यः आदेशः मम । भवतः आज्ञां शिरसा वक्ष्यामि अहम् । एतस्मिन् कार्ये अहं जयं प्राप्स्यामि इति दृढः विश्वासः अस्ति मम । अतः अनुज्ञां ददातु कृपया । एषोऽहं ससैन्यं प्रस्थानं करिष्यामि'' इति उक्तवान् ।

''महान् सन्तोषः पुत्र ! भवतः धैर्यम् आत्मविश्वासं च अहम् अभिनन्दामि । विजयं प्राप्य प्रत्यागच्छतु भवान्'' इति वदन् बिन्दुसारः अशोकं साधुवादेन अभिनन्दितवान् ।

ततः सः अन्यान् राजकुमारान् उद्दिश्य - ''अयि मूर्खाः ! इतोऽपि किमर्थं मत्पुरतः स्थिताः सन्ति भवन्तः ? इतः निर्गच्छन्तु तावत् । गृहं गत्वा विनोदेन कालं यापयन्तः मूषकाः इव चौर्येण लब्धं खादन्तः जीवन्तु भवन्तः'' इति कोपेन उक्तवान् ।

पञ्च अपि राजकुमाराः शिरः अवनमय्य मौनेन ततः निर्गताः । अशोकः पितरं प्रणम्य पितुः आशीर्वादम् अनुज्ञां च प्राप्य ततः निर्गतवान् ।

''पूज्यः गुरुवर्यः चाणक्यः यत् उक्तवान् तत् अवितथम् एव जातम् । मम पुत्रेषु अशोकः एकः एव श्रेष्ठः शूरः च इत्येतत् अद्य प्रमाणितम् अभवत् '' इति मन्त्रिणम् उक्तवान् बिन्दुसारः । तस्य मनसि किमपि गाढचिन्तनं प्रवर्तमानम् आसीत् ।

- (अनुवर्तते)






# मृणालिन्याः अपेक्षा

दृढव्रत त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षात् शवम् अवतार्य स्कन्धे संस्थाप्य यथापूर्वं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! एतस्मिन् गाढान्धकारे किमर्थं वृथा परिश्राम्यति भवान् ? केनचित् दुष्टेन वञ्च्यमानः तु नास्ति खलु भवान् ? लोके दुष्टजनानां, लुण्ठाकानां, नयवञ्चकानां वा अभावः नास्ति । अनिवार्यपरिस्थितौ विवेकिभिः यदा तैः सह व्यवहरणीयं भवति तदा तैः जागरूकता आश्रयणीया । अन्यथा तेषां मधुरवचनेन व्यामुग्धाः सन्तः ते वञ्चिताः भवेयुः । अत्र पुरुष-महिलाभेदः तु नास्ति । उदाहरणार्थं गन्धर्वेण वञ्चितायाः मृणालिनीनाम्न्याः राजकुमार्याः कथां श्रावयामि । श्रद्धया शृणोतु तावत्" इति ।

अनन्तरं वेतालेन कथा आरब्धा -

## वेतालकथा



कदाचित् मणिकण्ठनाम्नः गन्धर्वस्य इच्छा उत्पन्ना यत् भूलोकः द्रष्टव्यः इति । अतः सः चन्द्रिकामय्यां रात्रौ आकाशे विहरन् भूलोकम् आगतवान् । तस्मिन् समये वैदेह्याः युवराज्ञी मृणालिनी प्रासादस्य समीपे स्थिते उद्याने सखीभिः सह विहरति स्म । तस्याः सौन्दर्यं दृष्ट्वा मणिकण्ठः आश्चर्यचकितः जातः । ततः पूर्वं सः गन्धर्वलोके अपि तादृशीं सौन्दर्यवतीं न दृष्टवान् आसीत् ।

युवराज्ञ्या सह सम्भाषणीयम् इति इच्छा मणिकण्ठे उत्पन्ना । अतः सः आकाशात् उद्याने अवतीर्य तस्याः पुरतः आगत्य - ''हे अनुपमसौन्दर्यवति ! भवती का ?'' इति पृष्टवान् ।

मृणालिनी तं दृष्ट्वा आश्चर्येण - ''अहम् एतस्याः वैदेह्याः युवराज्ञी मृणालिनी । अस्य उद्यानस्य विशेषरक्षणव्यवस्था अस्ति । एका पिपीलिका अपि अन्तः आगन्तुं न शक्नोति । तथापि भवान् कथम् अन्तः आगतवान् ?'' इति पृष्टवती ।

''अहं गन्धर्वः । मणिकण्ठः इति मम नाम । आकाशे विहरणसमये भवत्याः सौन्दर्यं दृष्ट्वा अहम् अत्र अवतीर्णवान्'' इति उक्तवान् मणिकण्ठः ।

तत् उत्तरं श्रुत्वा युवराज्ञी भयेन सर्वत्र पश्यन्ती ''अनुक्षणं भवान् इतः गच्छतु । अन्यथा भटाः भवन्तं दृष्ट्वा बध्नन्ति'' इति उक्तवती ।

''गन्धर्वस्य मम असाधारणशक्तिं भवती न जानाति'' इत्युक्त्वा मणिकण्ठः वायौ हस्तं चालितवान् ।

तदा युवराज्ञ्याः सख्यः भटाः च प्रज्ञाहीनाः अभवन् ।

एतत् दृष्ट्वा ''अंत्यद्भुतम्'' इति हसन्ती उक्तवती युवराज्ञी ।

तत् वचनं श्रुत्वा गन्धर्वः सन्तोषेण - ''सुन्दरि ! झटिति एवं पृच्छन् अस्मि इति कुपिता मा भवतु । भवती परिणेतव्या इति इच्छां गोपयितुम् अशक्तः अस्मि अहम्'' इति उक्तवान् ।

मृणालिनी सकृत् तं परिक्षादृष्ट्या दृष्ट्वा शिरः अवनमय्य - ''मम पिता मम विवाहार्थं बहुभ्यः दिनेभ्यः प्रयत्नं कुर्वन् अस्ति । अनुरूपः कोऽपि मया न दृष्टः । इदानीं भवन्तम् अङ्गीकुर्वती अस्मि । परन्तु आवयोः विवाहात् पूर्वं भवता एकं कष्टसाध्यं कार्यं करणीयम् अस्ति'' इति

उक्तवती ।

"किं तत् ?" इति कुतूहलेन पृष्टवान् मणिकण्ठः ।

"मां परिणेतुम् इच्छति प्रतिवेशिराज्यस्य राजा वीरसेनः । परन्तु तस्मिन् किञ्चिदपि अनुरागः नास्ति मम । सः मम पित्रा सह युद्धं कर्तुं सिद्धतां कुर्वन् अस्ति । तस्य सैन्यबलम् अस्माकम् अपेक्षया अधिकम् अस्ति । यदि भवान् तं जयेत् तर्हि भवन्तं हृत्पूर्वकं परिणयेयम्" इति उक्तवती युवराज्ञी ।

"अल्पतरं कार्यम् एतत् । इदानीमेव अहम् अस्माकं राजानं चित्रसेनं विषयम् उक्त्वा कार्यं संसाध्य आगमिष्यामि" इत्युक्त्वा मणिकण्ठः अदृश्यः जातः ।

मणिकण्ठः भूलोकस्य कस्याश्चित् कन्यायाम् अनुरक्तः अस्ति इति ज्ञात्वा गन्धर्वराजः चित्रसेनः अत्यन्तं क्रुद्धः जातः । मणिकण्ठाय घोरदण्डनं दातव्यमिति सः चिन्तयन् आसीत् । तावता तेन वास्तविकः कश्चन विषयः स्मृतः । तदीया पुत्री कान्तिमती अपि मणिकण्ठे अनुरक्ता आसीत् । मणिकण्ठः एव परिणेतव्यः इति इच्छति स्म सा ।

अतः चित्रसेनः मणिकण्ठम् उद्दिश्य - "मानव-गन्धर्वयोः विवाहसम्बन्धः न युज्यते । मम पुत्र्याः अपेक्षां मा तिरस्करोतु" इति बोधनं कृतवान् ।

परन्तु मणिकण्ठः तस्य प्रस्तावं न अङ्गीकृतवान् । "युवराज्ञी मृणालिनी एव परिणेतव्या । एतस्मिन् विषये पुनश्चिन्तनं सर्वथा नास्ति" इति उक्तवान् सः ।



एतेन कुपितः चित्रसेनः - "तर्हि गन्धर्वलोके इतःपरं भवतः कृते स्थानं नास्ति । इतःपरं भवान् भूलोके एव जीवनं करोतु । एतस्मात् क्षणात् एव भवतः मन्त्रशक्तयः निष्प्रयोजिकाः भवन्तु" इति शप्तवान् ।

एतेन मणिकण्ठः किञ्चिदपि विचलितः न जातः । सः युवराज्ञीं द्रष्टुं भूलोकं गतवान् । वैदेह्याः राजा चन्द्रकेतुः पुत्र्याः द्वारा मणिकण्ठस्य वृत्तान्तं सर्वं ज्ञातवान् । तम् आदरेण स्वागतीकृत्य तस्य मुखात् प्रवृत्तं श्रुतवान् ।

'मणिकण्ठः गन्धर्वराजस्य शापेन ग्रस्तः जातः' इति ज्ञात्वा मृणालिनी पृष्टवती - "तर्हि इदानीं भवान् कथं राजानं वीरसेनं जयति ?" इति ।

''यद्यपि मयि इदानीं मन्त्रशक्तिः नास्ति, तथापि भुजबलं तु अस्ति एव । भवतीं परिणेतुम् अहं प्राणान् अपि पणीकर्तुं सिद्धः अस्मि । अतः धैर्येण युद्धभूमिं गत्वा पराक्रमेण युद्धं कृत्वा वीरसेनं जेष्यामि'' इति उक्तवान् मणिकण्ठः आत्मविश्वासेन ।

अनन्तरं मासाभ्यन्तरे एव सः चन्द्रकेतोः सेनाधिपत्यं वहन् रथिकानाम् अग्रेसरस्थाने स्थित्वा वीरसेनस्य दुर्गस्य उपरि आक्रमणं कृतवान् ।

वीरसेनः अपि महापराक्रमशाली । तयोः मध्ये घोरयुद्धं संवृत्तम् । सैनिकाः स्वस्य नायकाय पूर्णसहकारं दत्त्वा युद्धं कृतवन्तः ।

तस्मिन् समये वीरसेनेन क्षिप्तः कश्चन बाणः वेगेन मणिकण्ठस्य शिरसः समीपम् आगतः । किन्तु अत्रान्तरे कश्चित् सैनिकः शीघ्रम् आगत्य तस्य पुरतः स्थितवान् । बाणः तस्य सैनिकस्य भुजेन घट्टितः अभवत् । तं सैनिकं दृष्टवतः मणिकण्ठस्य मनसि 'एतं कुत्रापि दृष्टवान् अस्मि' इति भावना आगता ।

एतस्मात् नितरां क्रुद्धः मणिकण्ठः तूणीरे विद्यमानान् सर्वान् बाणान् निरन्तरं प्रेरयन् वीरसेनस्य उपरि बाणानां वृष्टिमेव कृतवान् । तेषु एकः बाणः वीरसेनस्य हृदये लग्नः जातः । तेन ताडनेन सः उच्चैः क्रन्दनं कुर्वन् रथात् अधः पतितवान् । एतत् दृष्ट्वा तस्य सैनिकाः भयेन धावितवन्तः ।

अनुक्षणं मणिकण्ठः रथात् अवतीर्य येन तस्य प्राणाः रक्षिताः आसन् तम् अन्विष्य गतवान् । व्रणिताः सैनिकाः यत्र आसन् तत्रैव सः सैनिकः दृष्टः । तस्य शिरस्त्राणं किञ्चित् वक्रम् आसीत् । तत् दृष्ट्वा तां व्यक्तिं प्रत्यभिज्ञाय मणिकण्ठः दिग्भ्रान्तः जातः । यतः गन्धर्वराजस्य पुत्री कान्तिमती



एव सैनिकवेषं धृत्वा आगत्य तं रक्षितवती आसीत् ।

मणिकण्ठः झटिति तस्याः योग्यशुश्रूषां कृतवान् । तस्याः प्रज्ञा आगता । कान्तिमती नेत्रे उद्घाट्य मणिकण्ठं दृष्ट्वा लज्जया नेत्रे निमीलितवती । मणिकण्ठः - ''किमेतत् कान्तिमति ! भवतीं यः तिरस्कृतवान् तस्य कृते एतादृशः त्यागः वा ?'' इति पृष्टवान् आश्चर्येण ।

तदा सा - ''यत्र भवान् नास्ति तस्मिन् लोके स्थातुम् अशक्ता अहं - 'भवन्तं पश्यन्ती वा भूलोके जीविष्यामि' इति विचिन्त्य अत्र आगता । मन्त्रशक्तिविहीनः भवान् यदा बलशालिना वीरसेनेन सह युद्धं कर्तुम् उद्युक्तः तदा भवतः हानिः भवेत् इति उद्देशेन अहं भवतः पृष्ठतः एव आसम् । मम मन्त्रशक्त्या तं जेतुम् अहम् अशक्ष्यम् । परन्तु स्वपराक्रमेण एव प्रियतमा लब्धा इति तृप्तिः भवतः भवतु इत्येव अहं तथा न कृतवती । इदानीं भवन्तं रक्षितवती इति एषा तृप्तिः एव पर्याप्ता मम । मृणालिनीं परिणीय सुखेन जीवतु भवान्'' इति उक्तवती ।

मणिकण्ठः तस्यै कृतज्ञताः समर्प्य ततः गत्वा मृणालिन्या मिलितवान् । राजा चन्द्रकेतुः वीरसेनं पराजितवन्तं तम् अभिनन्दितवान् । मृणालिनी परमानन्देन तम् उद्दिश्य - ''आवयोः विवाहः सम्पन्नः इत्येव । विवाहानन्तरं मम अन्या एका अपेक्षा भवता पूरणीया'' इति उक्तवती ।

''का सा अपेक्षा ?'' इति पृष्टवान् मणिकण्ठः ।

''सा तु तादृशी महती अपेक्षा न । भवतः पराक्रमः धनुर्विद्यानैपुण्यं च असाधारणम् । भवान् प्रतिवेशिराज्यानि जित्वा चक्रवर्ती भवेत् । तदा एव अहं



महाराज्ञी इति गौरवं प्राप्तुं शक्ष्यामि'' इति उक्तवती मृणालिनी ।

अनुक्षणं मणिकण्ठः उच्चध्वनिना - ''क्षम्यतां युवराज्ञि ! अहं भवतीं न परिणेष्यामि'' इत्युक्त्वा ततः शीघ्रं निर्गतवान् ।

वेतालः एवं कथां समाप्य - ''राजन् ! अन्तिमक्षणे मणिकण्ठस्य व्यवहारः विचित्रः इव भासते खलु ? उद्याने यदा मृणालिनी सखीभिः सह विहरन्ती आसीत् तदा सः स्वयं प्रत्यक्षः भूत्वा 'मां परिणयतु' इति तां प्रार्थितवान् आसीत् । तदर्थं सः गन्धर्वराजस्य पुत्र्याः अनुरागम् अपि निराकृतवान् । तेन कारणेन राज्ञः शापम् अपि प्राप्तवान् सः । 'असाधारणरूपवती भवती' इति मृणालिनीम् उक्त्वा तां परिणेतुं सिद्धः अपि आसीत् सः । एवं सति अन्तिमक्षणे ''भवतीं न परिणेष्यामि' इत्युक्त्वा किमर्थं सः प्रतिगतवान् ? एषा वञ्चना न वा ? अथवा गन्धर्वराजस्य शापात् तस्य यथा मन्त्रशक्तिः नष्टा तथैव विवेकः विवेचनाशक्तिश्चापि नष्टा जाता किम् ? एतेषां सन्देहानां समाधानं यदि भवान् जानन् अपि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इत्युक्तवान् ।

तदा त्रिविक्रमः - ''युवराज्ञ्याः मृणालिन्याः कृते मणिकण्ठः बहुविधान् त्यागान् कृतवान् । यदि सः तां वञ्चयितुम् अचिन्तयिष्यत् तर्हि सः तादृशं त्यागं कर्तुं सिद्धः न अभविष्यत् । तां परिणेतुं सः युद्धे स्वप्राणान् एव पणीकृतवान् आसीत् । रक्षितवतीं कान्तिमतीमपि निराकृतवान् सः । किन्तु विवाहाङ्गीकारकालः यदा आगतः तदा मृणालिनी - 'प्रतिवेशिराज्यानि जेतव्यानि । तदा एव अहं महाराज्ञी भूत्वा सर्वेषां गौरवं प्राप्तुं शक्ष्यामि' इति उक्तवती । स्वार्थिनः एव प्रतिवेशि-राज्यानाम् उपरि विना कारणम् आक्रमणं कृत्वा रक्तपातं कृत्वा चक्रवर्तित्वं प्राप्तुम् इच्छन्ति, न अन्ये । अतः एव मणिकण्ठः कान्तिमत्याः त्यागबुद्धिं मृणालिन्याः स्वार्थबुद्धिं च ज्ञात्वा मृणालिन्याः परिणयं निराकृतवान्'' इति उक्तवान् ।

एवं वदतः राज्ञः मौनभङ्गः यदा जातः तदा एव शवान्तर्गतः वेतालः अदृश्यः सन् वृक्षारोहणं कृतवान् ।





# राजवैद्यस्य चिकित्सा

चन्द्रगिरेः राजास्थानस्य वैद्यस्य कदाचित् अनारोग्यम् अभवत् । यद्यपि बहुदिनानि अतीतानि, तथापि तस्य रोगः न अपगतः । महाराजः एतं विषयं मन्त्रिणः पुरतः उपस्थापयन् - "अस्माकं राजवैद्यः स्वचिकित्सायाम् असफलः । अतः एतम् अन्यवैद्यस्य समीपं नयामः चेत् वरम् इति भाति मम" इति उक्तवान् ।

तदा मन्त्री किञ्चित् विचिन्त्य - "प्रभो ! अस्माकं राज्ये वैद्यानाम् अभावः नास्ति एव । तेषु आस्थानवैद्यस्य चिकित्सां कर्तुं कः समर्थः इति तु वयं न जानीमः । अतः एतस्मिन् विषये एकं प्रकटनं दद्मः । तदा अनुभवशालिनः, स्वचिकित्साक्रमे पूर्ण-विश्वासवन्तः वा आगत्य चिकित्सां कुर्युः" इति उक्तवान् ।

राजा एतत् अङ्गीकृतवान् । ततः एषा वार्ता सर्वत्र प्रसारिता । किन्तु एतां वार्तां श्रुत्वा अपि कोऽपि वैद्यः आस्थानवैद्यस्य चिकित्सां कर्तुम् अग्रे न आगतः ।

'आस्थानवैद्येन अज्ञातं वैद्यकीयरहस्यं किम् अस्ति ? तादृशस्य चिकित्सां कर्तुं वयं सर्वथा अशक्ताः । यदि अस्माकम् औषध-दानात् कोऽपि विकृतपरिणामः भवेत् तर्हि अस्माकं शूलारोपणं, कारागृहवासः वा भविष्यति एव' इति चिन्तयन्तः वैद्याः चिकित्सार्थम् अग्रे न आगताः एव ।

एषा परिस्थितिः सर्वेषु चिन्ताम् अजनयत् । किन्तु अत्रान्तरे दयानन्द-पण्डितः नाम कश्चित् वैद्यः 'आस्थानवैद्यस्य चिकित्सां करोमि' इति वदन् आगत्य मन्त्रिणा मिलितवान् । मन्त्री तम् आस्थानवैद्यस्य समीपं प्रेषितवान् ।

आस्थानवैद्यः दयानन्दपण्डितं पृष्टवान् - "भवतः गुरुः कः ?" इति ।

तदा दयानन्दपण्डितः विनयेन -

'भामहः'

"वैद्याचार्य ! अहं प्रभुशङ्करस्य शिष्यः । तस्य मुखात् भवतः विषयं बहुधा श्रुतवान् अस्मि । भवन्तौ अभिन्ने गुरुकुले विद्यां गृहीतवन्तौ इति श्रुतम्" इति उक्तवान् ।

सहपाठिनः नाम श्रुत्वा आस्थानवैद्यः सन्तोषेण - "अहो, सः इदानीमपि मां स्मरति किम् ? महान् सन्तोषः । सः एव भवन्तं प्रेषितवान् किम् ?" इति पृष्टवान् ।

"तथा नास्ति आचार्य ! एकस्मात् मासात् पूर्वं मम विद्याभ्यासः समाप्तः । मम स्वग्रामः राजधानीतः द्वियोजनदूरे अस्ति । तत्रैव वैद्यवृत्तेः आरम्भः करणीयः इति चिन्तयन् आसम् । तदा एव भवतः अनारोग्यस्य विषयः ज्ञातः । अनुक्षणम् अहम् अत्र आगतोऽस्मि" इति उक्तवान् ।

पण्डितस्य उत्तरं श्रुत्वा आस्थानवैद्यः हसन् - "तर्हि अहं भवतः प्रथमरोगी अस्मि । अस्तु, परीक्षां कृत्वा चिकित्सायाः आरम्भं करोतु । वैद्यकीयक्षेत्रे मादृशस्य प्रतिभाशालिनः मम सहपाठिनः प्रभुशङ्करस्य शिष्ये भवति मम पूर्णविश्वासः अस्ति" इति उक्तवान् ।

ततः दयानन्दः चिकित्साम् आरब्धवान् । केषुचित् एव दिनेषु आस्थानपण्डितः रोगात् मुक्तः जातः ।

एतं विषयं ज्ञात्वा राजा मन्त्रिणम् उद्दिश्य - "अस्माकम् आस्थानपण्डिताय एव औषधं दत्त्वा तं रोगमुक्तं कृतवान् दयानन्दः । एतस्मात् सिद्धं यत् दयानन्दः आस्थानपण्डितस्य अपेक्षया अपि अधिकप्रतिभासम्पन्नः इति । आस्थान-पण्डितः तु वृद्धः जातः अस्ति । अतः दयानन्दम् एव आस्थानवैद्यं करवाम?" इति उक्तवान् । मन्त्री एतं प्रस्तावं सहर्षम् अङ्गीकृतवान् ।

अनुक्षणं राजा दयानन्दपण्डितम् आहूय विषयम् उक्तवान् ।

तदा दयानन्दपण्डितः एतं प्रस्तावं निराकुर्वन् - "आर्येण आस्थानवैद्येन अज्ञातं वैद्यकीयरहस्यं, चिकित्साक्रमः वा मया न ज्ञायते एव । ये अन्येभ्यः लीलया औषधं यच्छन्ति ते स्वचिकित्साविषये भयम् अनुभवन्ति । आस्थानवैद्यस्य विषये अपि एवम् एव प्रवृत्तम्" इति उक्तवान् ।

दयानन्दपण्डितस्य विवरणं, विनयगुणं च बहुमन्यमानः राजा तम् आस्थानवैद्यस्य सहायकवैद्यपदव्यां नियोज्य सत्कृतवान् ।



# दक्षिणभारतस्य प्रवेशद्वारम्

रचना - मीरा नायर् ◆ चित्राणि - गोपकुमारः




कोरमण्डलमार्गेण यदि वयम् अग्रे गच्छामः तर्हि मामल्लपुरं प्राप्नुमः, यच्च पल्लवानां काले नौकास्थानकम् आसीत् । ७ शतके स्थितस्य पल्लवराजस्य नरसिंहवर्मणः 'मामल्लः' इति नामान्तरम् आसीत् । तस्य शासनकाले निर्मितम् एतत् मामल्लपुरं गच्छता कालेन सुप्रसिद्धं जातम् । मामल्लबिरुदाङ्कितेन निर्मितम् इत्यतः एतस्य मामल्लपुरम् इति नाम । यत् पल्लवराज्ञां काले सुविख्यातम् आसीत् तदिदानीं समुद्रे लीनम् अस्ति । तत्काले महाकारकतया निर्मितानि शिलाशिल्पानि अद्यापि द्रष्टृणाम् आनन्दम् आश्चर्यं च वर्धयन्ति । एतानि निर्मातॄणां कलाभिरुचिं कलापोषकत्वं च स्मारयन्ति ।

तत्रत्येषु शिल्पेषु प्रमुखम् अस्ति अर्जुनतपश्शिल्पम् । एतस्य एव गङ्गावतरणम् इति नामान्तरम् अस्ति । २९ मीटर्दीर्घे १३ मीटर्-उन्नते शिलाखण्डे एतत् शिल्पं निर्मितम् अस्ति । एतादृशेषु शिल्पेषु आकारेण एतत् एव जगति अद्वितीयम् । वर्षाकाले आकाशात् पतितं जलं शिल्पस्य मध्ये स्थितात् रन्ध्रात् निर्गत्य भूमिं प्राप्नोति । पुराणकालस्य गङ्गावतरणघटनां स्मारयति एतत् शिल्पम् ।

मामल्लपुरे शिलाभिः निर्मितेषु देवालयेषु शिलारथदेवालयाः तावत् सुप्रसिद्धाः । एते रथाकारेण



अर्जुनतपश्शिल्पम्



*सुप्रसिद्धाः शिलारथाः*

निर्मिताः सन्ति । धर्मराजीयः अर्जुनीयः, भीमीयः, नकुलीयः, सहदेवीयः द्रौपदीयः, चेति एतेषां नामानि ।

एतेषां शिल्पानां पूर्वदिशि वराहगुहा महिषासुरमर्दिनीगुहा च अस्ति । एतयोः पुराणकथाः काश्चन चित्रिताः सन्ति ।

महाविष्णुः वराहावतारं प्राप्य हिरण्याक्षात् भूदेवीं रक्षितवान् यत् सा कथा वराहगुहायां शिलाखण्डे चित्रिता अस्ति ।

महिषासुरमर्दिनीगुहायां शिल्पशिला-फलकद्वयम् अस्ति । एकस्मिन् महिषासुरसंहारकथा चित्रिता अस्ति । महिषासुरः महता गर्वेण व्यवहरन् इन्द्रादिदेवान् एव स्वर्गात् निष्कासितवान् आसीत् । तस्य पीडाम् असहमानाः देवाः सम्भूय समालोच्य स्वदिव्यशक्तीः संयोज्य अम्बिकां (दुर्गां) सृष्टवन्तः । दुर्गा देवानां शक्तिम् आयुधानि च वहन्ती आक्रमणं कृत्वा महिषासुरस्य संहारं कृतवती । अतः एव सा 'महिषासुरमर्दिनी' इति नाम प्राप्तवती । नवरात्रोत्सवसन्दर्भे दुर्गा महिषासुरमर्दिनीत्वेन एव पूज्यते । महिषशिरस्कस्य राक्षसस्य उपरि सिंहारूढा दुर्गादेवी स्थिता यथा दृश्येत तथा शिल्पं निर्मितम् अस्ति अत्र ।



*जलेशयमन्दिरम्*

एतस्याः गुहायाः पुरोभागे योगनिद्रामग्नस्य महाविष्णोः आकृतिः चित्रिता अस्ति । समुद्रतीरे जलेशयमन्दिरम् अस्ति । एतस्य पुरोभागे समुद्रतरङ्गाघातः अस्तीत्यतः पृष्ठभागे मन्दिरप्रवेशार्थम् अवकाशः कल्पितः अस्ति । एषः वैष्णवालयः । आलय - प्राङ्गणे केचन नन्दिविग्रहाः सन्ति ।

महाबलिपुरस्य अपरं

वैशिष्ट्यम् अस्ति यत् शतकीय 'भूतत्ताळवार्' नामकः विष्णुभक्तः कविः अत्र एव जन्म प्राप्तवान् आसीत् ।

पल्लवराजानां कीर्तेः स्मारकं महाबलिपुरम् अतिक्रम्य यदि वयम् अग्रे गच्छामः तर्हि 'चोलमण्डल'नामकं कलाकाराणां ग्रामं प्राप्नुम । आधुनिकाः कलाकाराः एतस्मिन् प्रशान्ते परिसरे वसन्ति । आत्मना निर्मितानां कलाकृतीनां विक्रयणात् प्राप्तेन धनेन जीवनं यापयन्ति ते वर्णचित्राणि, रेखाचित्राणि, टेर्रकोट्-शिल्पानि अन्यानि कलात्मकवस्तूनि चापि अत्र प्रदर्शनार्थं स्थापितानि सन्ति । अत्र तदा तदा नृत्यप्रदर्शनानि कविसम्मेलनानि चापि प्रवर्तन्ते ।



अस्मद्देशस्थः अत्युन्नतः ध्वजस्तम्भः

चोलमण्डलग्रामम् अतिक्रम्य अग्रे गतं चेत् चन्नैनगरं प्राप्यते, यच्च पूर्वं मद्रास्नाम्ना निर्दिश्यते स्म, प्राचीने काले यच्च चन्नपत्तनम् इति उच्यते स्म । तमिळुनाडुराज्यस्य राजधानी चन्नै भारतस्य महानगरेषु चतुर्थं स्थानं वहति एतत् कोरमण्डलतीरे १७ कि.मी. प्रदेशे प्रसृतम् अस्ति । एतत् नगरं 'दक्षिणभारतस्य प्रवेशद्वारम्' इति उच्यते ।

१७ शतके आंग्लेयाः कोरमण्डलतीरे मद्रास् तः ४० कि.मी. दूरे आर्मुगांप्रदेशे यन्त्रागारं स्थापयितुं प्रयत्नं कृतवन्तः । किन्तु तत् स्थलं वाणिज्यादिव्यवहारार्थम् अनुकूलकरं न इति मत्त्वा ते अनुकूलं स्थलम् अन्विष्यन्तः दक्षिणाभिमुखं गतवन्तः । ततः १९३९ तमवर्षे जुलैमासे २२ तमे दिनाङ्के दामर्लवेङ्कटाद्रिनायकस्य द्वारा चन्द्रगिरिराजात् 'मद्रासकुप्पं'नामकंसमुद्रतीरस्थम् एकं लघु-ग्रामं क्रीतवन्तः ते । 'नरिमेड्' (शृगालानां वासस्थानं) इति जनैः निर्दिश्यमाना शुष्का भूमिः तैः वासयोग्या कृता । तत्रैव नगरं विकसितं जातम् । तदेव चन्नैनाम्ना निर्दिश्यमानम् अस्ति ।

आंग्लयन्त्रागारस्य संस्थापकः फ्रान्सिस् डे यन्त्रागारस्य रक्षणार्थं नियुक्तानां सैनिकानां वसत्यर्थम् एकं दुर्गं निर्मितवान् । दुर्गं



दुर्गस्थः वस्तुसङ्ग्रहालयः

निर्माणकार्यं १६४० तमे वर्षे एप्रिल्मासस्य २३ तमे दिनाङ्के आरब्धम् । तच्च दिनम् इंग्लेण्ड्देशे सेण्ट्जार्ज्दिनम् इति आचर्यते । अतः एतस्य दुर्गस्य नाम अपि 'सेण्ट् जार्ज् दुर्गम्' इति निश्चितम् अभवत् ।

अत्र १६८० तमे वर्षे सेण्ट्मेरीमन्दिरं निर्मितम् । भारते ऐदम्प्राथम्येन निर्मितं क्रैस्तमन्दिरम् एतत् । पूर्वं मृतानां शवसंस्कारं कृत्वा अत्रैव स्मारकशिलां स्थापयन्ति स्म । अमेरिकादेशे विश्वविद्यालयं स्थापितवतः गवर्नर् एलिहोयेल्वर्यस्य विवाहः अत्रैव प्रवृत्तः । एतस्मिन् भवने प्रवृत्तः प्रथमः विवाहः एषः । मदरास्सैनिकानां तात्कालिकवेषभूषणानि, आयुधानि, ईस्ट्इण्डियासंस्थायाः सैनिकानां चित्राणि च अत्र प्रदर्शनालये स्थापितानि सन्ति ।

दुर्गस्य अन्तः स्थिते वस्तुसङ्ग्रहालये अनेकानि चारित्रिकपत्राणि, मूलोल्लेखाः, तैलवर्णचित्राणि, नाणकानि, पदकानि, आयुधानि, शिल्पानि, नगरारम्भकालिकानि विशेषचित्राणि च सन्ति । एतत् भवनं १६८३ तमे वर्षे निर्मितम् । अत्र एव ब्याङ्क् आफ् मद्रास् आरब्धम् । अस्माकं देशे आरब्धः प्रथमः आधुनिकवित्तकोषः एषः । इतः एव इम्पीरियल्वित्तकोषः स्टेट्वित्तकोषः च प्रेरणां प्राप्नोत् । एतस्य उपरि वणिजां वार्तालापार्थं विशालः प्रकोष्ठः निर्मितः अस्ति । तदुपरि च दीपस्तम्भः अस्ति ।

सेण्ट्जार्ज्दुर्गे स्थितः ५० मीटर्-उन्नतः वृक्षनिर्मितः ध्वजस्तम्भः अस्मद्देशस्थेषु स्तम्भेषु एव अत्युन्नतः । तमिळुनाडुराज्यस्य विधानसभाभवनं, प्रधानसचिवालय-भवनं च एतस्य दुर्गस्य अन्तर्भागे एव अस्ति ।

दुर्गात् अनतिदूरे 'मरीनाबीच्' अस्ति । प्रपञ्चस्तरे दैर्घ्येण द्वितीयं स्थानम् एतस्य । ३५ कि.मी.दीर्घम् अस्ति एतत् । तमिळुनाडुमुख्यमन्त्रिषु सुविख्यातस्य सि.एन्. अण्णा-दोरैवर्यस्य स्मारकम् अत्र एव अस्ति ।

अनुयायिभिः 'अण्णा' इति निर्दिश्यमानः सि.एन्. अण्णादोरै तमिळुनाडुराजकीयक्षेत्रे सामाजिकक्षेत्रे च महत् परिवर्तनम् आनीतवान् । तस्य नेतृत्वेन युक्तः द्राविडमुन्नेत्रकलङ्घपक्षः १९६७ तमे वर्षे अधिकारसूत्राणि अगृह्णात् । ततः वर्षाभ्यन्तरे एव अण्णादोरै दिवं गतः । तदीयं मरणं जनेषु दिग्भ्रान्तिम् अजनयत् । लक्षशः जनाः अश्रुतर्पणेन अन्तिमनमनं कृतवन्तः । अण्णदोरै-स्मारकं यत्र अस्ति तत् इदानीम् यात्रास्थलं जातम् अस्ति । प्रतिदिनं सहस्रशः जनाः अत्र आगत्य एतस्य स्मारकस्य दर्शनं प्राप्य धन्यताभावम् अनुभवन्ति ।



*अण्णादोरैस्मारकम्*



# हानितः प्राप्तः लाभः

नगरे वर्धितया तुङ्गया सह ग्रामीणस्य शेखरस्य विवाहः जातः । यदा शेखरः शिक्षणं समाप्य उद्योगार्थं प्रयत्नं करोति स्म, तदा एव तस्य पिता मृतः । अतः कुटुम्बस्य दायित्वं तस्य शिरसि एव आपतितम् । विवाहवयस्का अनुजा आसीत् तस्य । तदीयम् आरोग्यमपि उत्तमं न आसीत् । अतः सः उद्योगान्वेषणविचारं त्यक्त्वा ग्रामे एव कृषिकार्यं द्रष्टुम् उद्युक्तः अभवत् ।

ग्रामजीवनं तुङ्गायै किञ्चिदपि न अरोचत । कदाचित् सा असन्तृप्त्या पतिम् उक्तवती - "वायुः, प्रकाशः वा एतत् गृहं न प्रविशति । तैलपानां मूषकाणां च पीडा सर्वदा भवति । विहारार्थं गन्तुं राममन्दिरं विना अन्यस्थलमेव नास्ति । यदि इतोऽपि षड् मासान् अत्रैव वसेयं तर्हि निश्चयेन उन्मत्ता भवेयम्" इति ।

"अहं पञ्चविंशतिवर्षेभ्यः अत्र एव सन्तोषेण अस्मि । भवती नगरे आसीत् इति कारणतः क्लेशः भवन् अस्ति । अल्पे एव काले अत्र वासः अङ्गीकृतः भविष्यति । चिन्ता मास्तु" इति उक्तवान् शेखरः ।

किन्तु दिने दिने तुङ्गायाः असन्तृप्तिः तु वर्धते स्म । अत्रान्तरे सा सख्याः विवाहार्थं नगरं गत्वा आगतवती । तदनन्तरं तु तस्याः मनसि ग्रामविषये जुगुप्सा अधिका जाता ।

कथञ्चित् कुटुम्बं नगरं प्रति नेतव्यम् एव इति निश्चित्य एकदा सा मातृगृहं गतवती । तत्र अश्रूणि स्रावयन्ती पितरम् उद्दिश्य उक्तवती - "तात ! भवान् मम आर्यपुत्राय कथञ्चित् एकं कार्यम् अन्विष्यतु । ग्रामे वासः सर्वथा न शक्यते" इति ।

तस्याः पिता स्वस्य स्नेहितस्य द्वारा नगरसमीपे स्थिते कस्मिंश्चित् ग्रामे जामात्रे उद्योगम् अन्विष्टवान् । एतां वार्तां पुत्रीं सूचितवान् च ।

'भगिनी'



तुङ्गा पतिं सर्वं निवेद्य - ''एतस्मात् ग्रामात् अस्मान् विमोचितवान् मम पिता'' इति सगर्वम् उक्तवती ।

तदा शेखरः किञ्चित् चिन्तयित्वा - ''यत् जातं तत् मङ्गलाय एव । तत्र वासः कृतः चेत् अनतिदूरे स्थिते नगरे मातुः उत्तमचिकित्सा कारयितुं शक्या । तथैव अनुजायाः कृते वरान्वेषणार्थम् अपि आनुकूल्यं भवेत् । कृष्यर्थं क्षेत्रम् अन्यस्मै समर्प्य गच्छाम'' इति उक्तवान् ।

''अहो अविवेकिता भवतः ! क्षेत्रं कृष्यर्थं यदि अन्यस्मै दद्मः तर्हि आयः बहु न्यूनः भवेत् । अतः भवतः माता, अनुजा च अत्रैव स्थित्वा कर्मकराणां द्वारा कार्यं कारयताम्'' इति उक्तवती तुङ्गा ।

अनन्यगतिकतया शेखरः एतं प्रस्तावम् अङ्गीकुर्वन् कृषिकार्यभारं मात्रे अनुजायै च दत्त्वा तुङ्गया सह नगरं प्रति प्रस्थितवान् ।

तुङ्गायै नूतनस्थलं बहु अरोचत । शेखरस्य अपि तत् कार्यम् इष्टाय जातम् । अथ कदाचित् विनायकचतुर्थीसमये ग्रामम् आगत्य गच्छन्तम् अग्रजम् उक्तवती अनुजा - ''आवां नवरात्रपर्वार्थम् आगत्य दीपावलीपर्यन्तं भवतः गृहे स्थास्यावः । आवां नगरं द्रष्टुम् इच्छावः'' इति ।

परन्तु अधिकदिनपर्यन्तं श्वश्रू-ननान्द्रोः स्वगृहे स्थितिं न इष्टवती तुङ्गा । अतः नवरात्रपर्वणः पूर्वमेव अनारोग्येण पीडिता इव अभिनयं कृत्वा सा शेखरम् उद्दिश्य - ''भवतः जनान् 'दीपावलीसमये एव आगन्तव्यम्' इति सूचयतु । ताः उपावेश्य भोजयितुं मम शक्तिरेव नास्ति'' इति उक्तवती ।

असहायकः शेखरः, केनचित् द्वारा मातरम्, अनुजां च सूचितवान् यत् दीपावलीसमये एव आगन्तव्यं, न इदानीम् इति । दीपावली आगता । तदा तुङ्गा शेखरम् उद्दिश्य - ''नवरात्रसमये मया कौशेयशाटिका स्वीकृता आसीत् । अतः इदानीं सुवर्णस्य वलयान् दापयतु'' इति उक्तवती ।

तदा शेखरः हसन् - ''अस्तु । मम माता अनुजा च प्रथमवारम् अत्र आगच्छन्त्यौ स्तः । ताभ्याम् उत्तमशाटिकाम् आनेष्यामि'' इति उक्तवान् ।

''शाटिकादिकम् अनुजायाः विवाह-काले दापयितुं शक्यते । वस्तुतः भवतः समीपे अधिकं धनं नास्ति इत्यतः अहं

वलयक्रयणं चिन्तितवती । यदि धनम् अस्ति तर्हि मह्यं कण्ठहारम् एव दापयतु'' इति अनुरोधपूर्वकम् उक्तवती तुङ्गा ।

शेखरः पत्नीं बहुधा हितवचनानि बोधितवान् । परन्तु सा स्वनिर्णयं न परिवर्तितवती । अतः शेखरः सायङ्काले पत्नीं भाटकवाहनेन नगरं नीतवान् । तत्र आभरणस्य आपणे काचकपेटिकायां स्थितः कण्ठहारः तुङ्गायै बहु अरोचत । तुङ्गा 'एतस्य मूल्यं कियत् ?' इति पृष्टवती । तदा आपणिकः - ''गुञ्जापरिमितस्य सुवर्णस्य मूल्यं सहस्रं रूप्यकाणि । एतस्मिन् हारे सप्तगुञ्जामितं सुवर्णम् अस्ति । अतः एतस्य मूल्यं सप्तसहस्रं रूप्यकाणि'' इति उक्तवान् ।



'यद्यपि मूल्यम् अधिकं, तथापि एषः एव कण्ठहारः आवश्यकः' इति अनुरोधपूर्वकम् उक्तवती तुङ्गा । असहायकः सन् शेखरः तं हारं स्वीकृतवान् । आपणिकः हारं दर्शयन् किञ्चिद्दूरे उपविष्टं प्राप्तिपत्रलेखकम् उद्दिश्य - ''हारः सप्तगुञ्जामितसुवर्णोपेतः'' इत्युक्त्वा हारं पेटिकायां संस्थाप्य तुङ्गायाः हस्ते दत्तवान् ।

प्राप्तिपत्रलेखकः हारस्य भारं सम्यक् न श्रुतवान् स्यात् । सः प्राप्तिपत्रे 'त्रिसहस्रं रूप्यकाणि' इति मूल्यम् उल्लिखितवान् ।

प्राप्तिपत्रलेखकेन कृतं दोषं ज्ञात्वा शेखरः तं विषयम् आपणिकं वक्तुम् यदा उद्युक्तः तदा तुङ्गा - ''दीपावलीसमये हस्तगतां लक्ष्मीं कोऽपि मतिमान् किं निराकरोति ? त्रिसहस्रं रूप्यकाणि दत्त्वा मौनेन आगच्छतु । अवशिष्टेन धनेन वलयान् क्रेतुं शक्यते'' इति उक्तवती ।

शेखरः त्रिसहस्रं रूप्यकाणि दत्त्वा बहिः आगत्य - ''कथञ्चित् धनम् अवशिष्टम् अस्ति किल ? मात्रे अनुजायै च शाटिकां स्वीकरवाम'' इति उक्तवान् ।

''किम् एतत् ? अवरोधं यदि अहं न अकरिष्यं तर्हि तत् धनं भवता आपणिकाय दत्तम् अभविष्यत् । अतः तत् धनं मम'' इति उक्तवती कुपिता तुङ्गा । शेखरः उत्तरं दातुम् अशक्तः जातः । ततः तौ ग्रामम् आगतवन्तौ ।

परन्तु तौ गृहं गत्वा पेटिकाम् उद्घाट्य यदा दृष्टवन्तौ तदा हारः एकत्र भग्नः दृष्टः । अनन्तरदिने तं सम्यक् कारयितुं स्वर्णकारस्य समीपं नीतवती तुङ्गा । स्वर्णकारः हारं सम्यक् परिशील्य - 'एषः

सुवर्णस्य न' इति उक्तवान् ।

तुङ्गायाः मनसि उद्वेगः सञ्जातः। 'आभरणस्य आपणिकः आवयोः नेत्रयोः पुरतः एव वञ्चनां कृतवान् अस्ति' इति चिन्तयन्ती सा शेखरेण सह तस्मिन् दिने सायङ्काले एव आपणं गतवती । वञ्चकम् आपणिकं दृष्ट्वा सा कोपेन - ''कीदृशी वञ्चना ! भवन्तं कारागृहं प्रेषयिष्यामि'' इति उक्त्वा हारं तस्मै दत्तवती ।

आपणिकः हारं दृष्ट्वा - ''एषः कण्ठहारः अस्माभिः विक्रीतः एव न'' इति उक्तवान् ।

''इतः एव क्रीतम् एतत् । पश्यतु भवता दत्तं प्राप्तिपत्रम्'' इति उक्त्वा प्राप्तिपत्रं तस्मै दत्तवती तुङ्गा । आपणिकः हारस्य भारं दृष्ट्वा - ''एषः सप्तगुञ्जामित-भारयुक्तः । अस्माभिः विक्रीतस्य हारस्य भारः गुञ्जात्रयमितः । प्राप्तिपत्रं तदनुगुणम् एव अस्ति । वस्तुतः भवन्तौ अस्मान् वञ्चयितुम् एव आगतवन्तौ'' इति उक्तवान् ।

'एते वञ्चयितुमेव हारस्य भारं न्यूनं लिखन्ति' इति ताभ्यां ज्ञातम् । असहायकौ तौ गृहं प्रत्यागतवन्तौ । ''कष्टेन सम्पादितानि त्रिसहस्रं रूप्यकाणि नष्टानि जातानि । तेषां नीचबुद्धिं स्मरामि चेत् मम शरीरे कण्टकानि उत्पद्यन्ते'' इति उक्तवती तुङ्गा कोपातिरेकेण ।

तदा शेखरः - ''पश्यतु । भवती स्वस्य दोषं न ज्ञातवती । आदौ भवती एव आपणिकं वञ्चयितुम् इष्टवती आसीत् । आपणिकस्य नीचबुद्धिं निन्दन्ती भवती श्वश्रू-ननान्द्रोः विषये कथं व्यवहृतम् इति विस्मरन्ती अस्ति । आपणिकस्य विषये भवती यथा वदति तथा अहमपि भवत्याः विषये वदामि चेत् गृहे शान्तिः भवितुम् अर्हति वा ?'' इति शान्तस्वरेण उक्तवान् ।

तानि वचनानि श्रुतवत्याः तुङ्गायाः ज्ञानोदयः अभवत् । सा वाहनं वस्त्रापणस्य समीपे स्थगयित्वा शेखरम् उद्दिश्य - ''पर्वार्थं श्वश्र्वाः, भवतः अनुजायाः च कृते शाटिकां स्वीकरवाव, आगच्छतु तावत्'' इति उक्तवती ।

पत्न्यां जातं परिवर्तनं दृष्ट्वा शेखरः अत्यन्तं सन्तुष्टः । 'यद्यपि त्रिसहस्रं रूप्यकाणि नष्टानि अभवन्, तथापि तस्मात् प्रसङ्गात् लाभः एव जातः' इति चिन्तयन् सः उत्साहेन वस्त्रापणं प्रति गतवान् ।



# चन्दमामायाः

# सुवर्ण-समयः - ११





१. यः बौद्धदेवालयः अतिविशालत्वेन ख्यातः अस्ति तम् ....

एषः ८०० तमे क्रिस्ताब्दे निर्मितः । क्रिस्तात् पूर्वं प्रथमे शतके बौद्धमतं हीनयान-महायानत्वेन द्विधा विभक्तं जातम् । बौद्धसिद्धान्ते श्रेष्ठत्वेन परिगण्यमानया महायानशाखया सम्बद्धः अस्ति एषः सुविख्यातः अतिविशालः देवालयः ।

## प्रपञ्चे एतान् वयं कुत्र द्रष्टुं शक्नुयाम ?

२. यः अतिप्राचीनः सन् अपि जीवति तं वृक्षम् ....

९०० वर्षाणि जीवितवान् इति यस्य विषये बैबल्ग्रन्थे श्रूयते तस्य म्याथ्यूसस्य नाम्ना एषः वृक्षः निर्दिश्यते । सूचीसदृशीभिः शाखाभिः युक्तस्य एतस्य देवदारुवृक्षस्य वयः ४,६०० वर्षाणि ।



३. या क्लियोपात्रासूची इति ख्याता अस्ति ताम् ....

३,५०० वर्षेभ्यः पूर्वं कृष्णशिलया निर्मितः स्तम्भः एषः । ईजिप्ट्देशीयः तृतीयः फरोतुट्मास् १४७५ तमे क्रिस्तपूर्वाब्दे सूर्यदेवालयस्य निमित्तम् एतं निर्मितवान् आसीत् ।



४. या निश्वाससेतुः इति निर्दिश्यते ताम् ....

कुल्यायाः अनन्तरं स्थितं कारागारं एतस्याः सेतोः द्वारा नयन्ति स्म । एतेन सेतुमार्गेण गच्छन्तः बन्दिजनाः मुखं परिवृत्य पृष्ठतः स्थितं नगरम् अन्तिमतया पश्यन्तः दीर्घं निश्वसन्ति स्म ।





चित्र-
समस्या

एतत् चित्रं जागरूकतया पश्यन्तु भवन्तः । किञ्चित् चिन्तनं कृतं चेत् अत्रत्यः दोषः स्फुटीभवति ।

## साहसमयी समुद्रयात्रा

नूतनं समुद्रमार्गम् अन्वेष्टुम् उद्युक्तेन क्रिस्तफर् कोलम्बस्वर्येण प्रयाणार्थम् उपयुक्ता 'सन्त् मेरिया'नामिका नौका एषा ।

## चित्रीयाः प्रश्नाः

१. एतस्मिन् चित्रे त्रिंशदधिकानि त्रिकोणानि सन्ति । कति सन्ति इति ज्ञातुं शक्नुवन्ति वा भवन्तः ?





२. षट् समकोणचतुरस्राणि निर्मातुं १७ अग्निशलाकाः उपयुक्ताः सन्ति । त्रीणि चतुरस्राणि अवशेष्य सप्त शलाकाः किम् अपनेतुं शक्नुवन्ति भवन्तः ?

३. एतेषु कस्मात् दन्तं प्राप्नुमः वयम् ?



# विनोदप्रश्नाः



१. कश्चन स्वसमीपे स्थिते टैर्साधने वायुः नास्ति इति अजानन् एव यानं चालयन् कार्यानेन देहलीतः प्रस्थाय आगरानगरं प्राप्तवान् । कथम् एतत् शक्यं जातम् ?

२. कश्चन शुनकः मीटर्दैर्घ्ययुक्तया शृङ्खलया बद्धः अस्ति । तथापि सः त्रिमीटर्दूरे पतितम् अस्थिखण्डं विनाश्रमं स्वीकृतवान् । कथम् एतत् ?




३. कश्चन चोरः आत्मना चोरितं कार्यानं पङ्क्तिशः स्थितानां कार्यानानां मध्ये परित्यज्य पलायितवान् । अल्पे एव काले आरक्षकनिरीक्षकः तत्र आगतवान् । यद्यपि चोरेण कृतं कार्यानत्यागं सः न दृष्टवान् आसीत्, तथापि सः तत् कार्यानं लीलया अभिज्ञातवान् । एतत् कथं शक्यं जातम् ?



४ कश्चन मूकः मुद्गरं क्रेतुम् इच्छन् आपणं गतवान् । मुद्गरः आवश्यकः इति सः अभिनयेन सूचितवान् । आपणिकः तस्य आवश्यकताम् अवगत्य मुद्गरं दत्तवान् । अनन्तरम् अपरः मूकः आगत्य अङ्गुलीः वर्तयन् 'स्क्रूड्रैवर्'साधनम् आवश्यकम् इति अभिनयेन सूचितवान् । तदा अपि आपणिकः तस्य आवश्यकताम् अवगत्य तत् साधनं वान् । अनन्तरं कश्चन अन्धः तत्र आगतः । तेन क्रकच अपेक्ष्यते स्म । स्वस्य आवश्यकताम् अवगमयितुं तेन कथम् अभिनयः करणीयः इति किं वक्तुं शक्नुवन्ति भवन्तः ?

## कृदणात् ज्ञायताम्

## अङ्कुरान् उत्पादयति गजः !



**अपेक्षितानि साधनानि -**

सामान्याकारकम् आलुकम्, प्लास्टिसैन्, चतस्रः पयोहिमशलाकाः, अल्पः स्पञ्जखण्डः, कानिचन कुस्तुम्बरीबीजानि च ।

**सज्जीकरणक्रमः -**

१. लघुभिः प्लास्टिसैन्गोलकैः शुण्डां, पुच्छं, नेत्रे, कर्णौ च सज्जीकृत्य चित्रे दर्शितेन क्रमेण आलुके योजयन्तु ।

२. ततः पयोहिमशलाकाः चतुर्षु स्थलेषु संयोज्य तस्य पादयुक्ततां सम्पादयन्तु ।

३. आलुकस्य मध्ये लघुरन्ध्रं निर्माय तस्य अन्तः आर्द्रीकृतं स्पञ्जखण्डं कुस्तुम्बरीबीजानि च स्थापयन्तु ।

४. केषुचित् एव दिनेषु बीजानि आलुकं च अङ्कुरयुक्तानि द्रष्टुंशक्नुवन्ति भवन्तः ।

लिख्यतां चित्रम्

## 'L'आकारात् सिंहः




## सुवर्णसमयस्य (१०) उत्तराणि -



**प्रपञ्चे कुत्र द्रष्टुं शक्नुयाम ?**

१. जपान्देशे । फ्यूजियामापर्वतः इति एतस्य नाम ।
२. मियान्मार् (बर्मादेशे) ।
३. लण्डन्नगरे स्थिता । (इङ्ग्लैण्ड्देशे) ।
४. मडगास्कर्प्रदेशे ।
५. दक्षिण-आफ्रिकादेशे किम्बर्लिप्रदेशे ।

**कथासमस्या**

शिरस्त्रस्वामिनः शिरः बृहदाकारकम् इति होम्स्वर्येण यत् उक्तं तत् युक्तम् एव । यतः शिरस्त्रस्य आकारः बृहत् आसीत् । किन्तु होम्स्वर्येण ऊहितं यत् शिरस्त्रधारी बुद्धिमान् इति तत् अयुक्तम् । बुद्धिमत्ता शिरसः आकारं न अवलम्बते खलु ? कथायाः वर्णनात् ज्ञायते यत् शिरस्त्राकारात् अपि होम्स्वर्यस्य शिरः लघु इति । किन्तु होम्स्वर्यस्य बुद्धिमत्ता तु न अल्पा ।

**चित्रसमस्या**

रेड्-इण्डियन्जनाः अश्ववन्तः न आसन् । अमेरिकां प्रति स्पेन्देशीयाः अश्वान् आनीतवन्तः ।

**चित्रीयाः प्रश्नाः -**

१. अर्चर् मीनस्य । सः जलप्रेरणात् कीटान् पातयित्वा खादति । २. मृतसमुद्रः इति । यद्यपि एतस्य नाम्नि समुद्रशब्दः श्रूयते, तथापि एषः न समुद्रः, अपि तु सरोवरम् । ३. पोर्चुगल्देशम् ।




गान्धर्वयुद्धे पराजितः दुर्योधनः कथञ्चित् स्वजीवरक्षणं कृत्वा महता अपमानेन तप्यमानः सन् स्वजनैः सह वनात् हस्तिनापुरं प्रति प्रस्थितवान् । मार्गे एकः तटाकः लब्धः । तत्रैव शिबिरं निर्माय तात्कालिकवसतिं कृतवान् सः ।

युद्धे पराजयं प्राप्य पलायितवान् कर्णः अपि तत् शिबिरम् आगतवान् । सः दुर्योधनस्य श्लाघनं कृतवान् - "भवान् महापराक्रमी । एकः एव भवान् गन्धर्वान् युद्धे पराजितवान् । भवादृशः शूरः विश्वे अपरः कोऽपि नास्ति" इति ।

कर्णस्य श्लाघनस्य श्रवणात् दुर्योधनस्य दुःखम् अधिकम् अभवत् । सः युद्धे यद्यत् संवृत्तं तत्सर्वं कर्णं निवेद्य - "मित्र ! यदि जयः प्राप्तः स्यात् तर्हि कीर्तिः अभविष्यत् । यदि मरणं स्यात् तर्हि स्वर्गप्राप्तिः वा अभविष्यत् । किन्तु इदानीं तदुभयम् अपि न जातम् । उपहासपात्रता प्राप्ता मया । एतम् अपमानं सोढुं न शक्नोमि । अतः हस्तिनापुरं प्रति न गच्छामि । पितुः कृते मुखं दर्शयितुं मम मनः न इच्छति । युद्धविवरणं कथं वा बान्धवान् वदामि ? वस्तुतः मम जीवनात् एव विरक्तिः आगता । अहम् अत्रैव प्रायोपवेशं करिष्यामि । भवन्तः सर्वे हस्तिनापुरं गत्वा, दुश्शासनस्य पट्टाभिषेकं कुर्वन्तु" इति उक्त्वा अनुजम् आलिङ्गितवान् ।

कर्णः दुर्योधनस्य शोकं दृष्ट्वा कुपितः । "भवान् किमर्थं शोकं करोति ? एतेन इतोऽपि दुःखम् अधिकं भवति । मनसः शान्तिः न नश्यति । पाण्डवाः भवन्तं मोचितवन्तः इति भवान् किमर्थं चिन्तां करोति ? भवतः प्रजाः ते भवदीयां सेवां कृतवन्तः । कर्तव्यं पालितवन्तः, तावदेव । अत्र अवमानस्य का प्रसक्तिः ? भवान्



मरणं प्राप्नोमि इति यद् वदति, तद् भवतः सामन्तराजाः यदि श्रृण्वन्ति तर्हि ते भवन्तं उन्मत्तं भावयन्ति । अतः दुर्योधन ! एतादृशम् अविवेकपूर्णं चिन्तनं त्यजतु'' इति सः बोधितवान् ।

अनुपदमेव शकुनिः उक्तवान् - ''अहं द्यूतेन पाण्डवानां सर्वस्वं स्वायत्तीकृत्य भवते दत्तवान् अस्मि । परन्तु भवान् - 'तत् सर्वं त्यक्त्वा प्रायोपवेशं करोमि' इति वदति खलु ! एतद् अत्यन्तम् अनुचितं कार्यम्'' इति ।

कस्यापि वचनं श्रोतुम् अनिच्छन् दुर्योधनः दर्भान् भूमौ प्रसार्य, वल्कलवस्त्रं धृत्वा प्रायोपवेशार्थं सिद्धः जातः ।

देवाताभिः पराजिताः असुराः पाताललोके वसन्ति स्म । तैः दुर्योधनस्य प्रायोपवेशदीक्षाविषयः ज्ञातः । तत्क्षणं ते तं पातालम् आनेतुम् अग्निं प्रतिष्ठाप्य, अथर्ववेदमन्त्रेण यज्ञं कृतवन्तः । ततः 'कृत्य'नामकः पुरुषः उद्भूतः । सः तान् पृष्टवान् - ''मया किं कर्तव्यम् ?'' इति ।

असुराः उक्तवन्तः - ''भूलोके प्रायोपवेशं कर्तुम् उद्युक्तं दुर्योधनं पाताललोकम् आनयतु'' इति । कृत्यः दुर्योधनं पातालं प्रति आनीतवान् ।

दानवाः आरात्रि दुर्योधनेन सह वार्तालापं कृतवन्तः । ''भवतः सामन्तराजाः बहुशूराः । भवान् च उत्तमः क्षत्रियः । क्षत्रियधर्मं परित्यज्य भवान् प्रायोपवेशं कर्तुं किमर्थम् उद्युक्तः ? एतेन आत्महत्यादोषात् ऋते अन्यत् किमपि न लभ्यते । सुखं, शान्तिः, कीर्तिः वा न उपलभ्यते । भवान् प्रायोपवेशं करोति चेत् भवतः शत्रवः आनन्दम् अनुभवन्ति, तावदेव । ईश्वरवरप्रसादेन भवतः शरीरं वज्रमयम् अस्ति । लोकमातुः वरप्रसादेन वयमेव भवतः शरीरस्य सृष्टिं कृतवन्तः । भवान् सामान्यः न । साक्षात् दैवांशसम्भूतः । भवतः पक्षपातिनः सर्वे अपि अस्मदंशसम्भूताः एव । भवतः स्नेहितः कर्णः अपि नरकासुरस्य अंशेन सम्भूतः । अतः अलं चिन्तया, प्रायोपवेशेन वा'' --इति उक्त्वा तस्मिन् उत्साहं पूरयित्वा प्रेषितवन्तः । कृत्यः तं पुनः भूलोकम् आनीय यथापूर्वं दर्भशय्यायां शाययित्वा अदृश्यः अभवत् ।

प्रभाते निद्रातः उत्थितः दुर्योधनः रात्रौ संवृत्तं सर्वं स्वप्नं भावितवान् । अतः

आत्मना दृष्टम् अनुभूतं च कमपि न उक्तवान् सः ।

कर्णः पुनरपि दुर्योधनस्य सान्त्वनं कृतवान् । एतेन समाहितः दुर्योधनः परिवारजनैः सह उत्साहेन हस्तिनापुरं समागतः । सभायां भीष्मः दुर्योधनम् उद्दिश्य - ''भवान् अस्माकं सर्वेषां वचनं तिरस्कृत्य, घोषयात्रां गत्वा पराजयं प्राप्तवान् । धर्मराजः भवतः मानं संरक्ष्य, भवद्विषये औदार्येण व्यवहृतवान् । कर्णस्य वचनं श्रुत्वा भवान् पाण्डवानां वैमनस्यं सम्पादितवान् । यस्मिन् भवतः विशेषमैत्री अस्ति सः कर्णः भवतः आपत्काले पलाय्य स्वप्राणान् रक्षितवान् । अतः दुर्योधन ! इदानीं वा भवान् पाण्डवैः सह सन्धिं कृत्वा, वंशस्य रक्षणं करोतु'' इति उक्तवान् ।

गर्वितः दुर्योधनः एतस्मिन् उपदेशे अनादरं प्रकटयन् अट्टहासं च कुर्वन् कर्ण-शकुनि-दुश्शासनैः सह सभातः निर्गतः ।

भीष्मस्य वचनेन कर्णः नितरां खिन्नः जातः आसीत् । अतः सः दुर्योधनम् उक्तवान् - ''राजन् ! सेनां मदधीनां करोतु । अर्जुन-भीष्म-नकुल-सहदेवैः सम्भूय सम्पादितान् देशान् अहम् एकः एव जित्वा भवते दास्यामि । तदा सः वृद्धः भीष्मः मां लघुतया परिगणयितुम् अर्हः न भविष्यति'' इति । दुर्योधनः 'अस्तु' इति वदन् अनुमतिं दत्तवान् । सेनासमेतं गतः कर्णः प्रथमं द्रुपदराजं पराजित्य उपायनं स्वीकृत्य, ततः उत्तराभिमुखं गत्वा अङ्ग-वङ्ग-कलिङ्ग-मगध-मत्स्य-कोसल-प्रभृतीनां



देशानां राज्ञः जित्वा सर्वेभ्यः अपि उपायनं प्राप्तवान् । पश्चात् सः दक्षिणे अपि जैत्रयात्रां कृत्वा अनेकान् राज्ञः जितवान् । रुक्मिप्रभृतयः राजानः तस्य विरोधम् अकृत्वा स्नेहेन एव उपायनादिकं दत्तवन्तः । एवं दिग्विजयं कृत्वा महत् ऐश्वर्यं सम्पाद्य कर्णः हस्तिनापुरं प्रत्यागतवान् ।

दुर्योधनः कर्णेन कृतं साहाय्यं कृतज्ञतापूर्वकं स्मरन् - ''यद्यपि मम पक्षे भीष्मः, द्रोणः, बाह्लीकः इत्यादयः सन्ति, तथापि भवता यादृशं साहाय्यं कृतं तादृशं न कृतं तैः । भवत्सदृशः अन्यः नास्ति एव लोके'' इति श्लाघितवान् ।

कर्णस्य दिग्विजयस्य अनन्तरं दुर्योधनस्य मनसि भावना आगता यत् मया अपि राजसूययागः करणीयः इति । तदर्थं सः



ऋत्विजः मेलयित्वा निवेदितवान् यत् सर्वविधव्यवस्थां कृत्वा भवद्भिः राजसूययागः निर्वर्तनीयः इति ।

किन्तु ऋत्विजः एतं प्रस्तावं निराकुर्वन्तः - "यावत् पाण्डवाः भवता न जीयन्ते तावत् राजसूययागः कर्तुं न शक्यः। अन्यच्च भवतः पिता इतोऽपि जीवति । अतः भवान् चक्रवर्ती भवितुं न अर्हति । अतः राजसूययागस्य चिन्तनं सर्वथा मास्तु । राजसूययागसमः कश्चन अन्यः यागः अस्ति । तस्य नाम वैष्णवयागः इति । तं यागं कर्तुम् अर्हति भवान्" इति सूचितवन्तः ।

दुर्योधनः एतत् वचनं कर्णशकुनि-प्रभृतीन्, अनुजान् च उक्तवान् । तदा ते उक्तवन्तः - 'ऋत्विजः यथा वदन्ति तथा करणम् एव उचितम्' इति । ततः यज्ञस्य निमित्तं सर्वविधसन्नाहाः कृताः । राजधानीतः बहिः यज्ञशाला निर्मिता । द्वैतवने वसतां पाण्डवानां निमन्त्रणार्थं दुर्योधनः दूतं प्रेषितवान् ।

यागवार्तां श्रुत्वा सन्तोषं प्रकटयन् धर्मराजः - "दुर्योधनः यागं करोति यत् तत् महते सन्तोषाय । यज्ञकाले उपस्थातव्यम् इति ममापि महती इच्छा । किन्तु इदानीं यदि अहम् हस्तिनापुरम् आगमिष्यामि तर्हि मम वनवासदीक्षायाः भङ्गः भवति । अतः अहम् आगन्तुं न शक्नोमि । भवान् एतं विषयं मद्वचनैः राजानं वदतु" इति उक्तवान् ।

किन्तु तं दूतम् उद्दिश्य उक्तवान् भीमः - "वनवासस्य अज्ञातवासस्य च अनन्तरं धर्मराजः दुर्योधनं तदनुजान् च बलिपशुत्वेन परिकल्प्य आयुधैः एकं महायज्ञं करिष्यति । तस्मिन् यज्ञे भागं ग्रहीतुं वयं सर्वे आगमिष्यामः । मद्वचनैः भवान् एतं सन्देशं दुर्योधनं वदतु" इति ।

दुर्योधनस्य वैष्णवयागः निर्विघ्नं यथाविधि परिसमाप्तः । कर्णः दुर्योधनम् अभिनन्दनवचनानि वदन् - "अग्रिमे युद्धे पाण्डवान् जित्वा भवद्द्वारा राजसूययागम् एव कारयिष्यामि" इति उक्तवान् ।

पाण्डवाः द्वैतवने दीर्घकालं यावत् स्थितवन्तः आसन् । अतः तत्र मृगाणां सङ्ख्या न्यूना जाता । तत्कारणतः धर्मराजः अनुजैः सह पुनरपि काम्यकवनं गतवान् । तत्र ते फल-मूल-कन्द-शाकादिभिः उदरं पूरयन्तः दिनानि यापितवन्तः ।

एवम् एकादशवर्षात्मकः वनवासः समाप्तः । धर्मराजस्य मनः अशान्तम् आसीत् । 'यदि अहं द्यूते मतिं न कृतवान् स्यां तर्हि मम अनुजैः द्रौपद्या च एतादृशं कष्टम् अनुभोक्तव्यं न अभविष्यत् । अग्रिमदिनानि स्मरामि चेत् शरीरं भीत्या कम्पते । 'पाण्डवान् सर्वान् मारयिष्यामि' इति दुर्योधनाय वचनं दत्तवान् अस्ति कर्णः । अतः अस्माभिः सर्वैः घोरयुद्धे भागः ग्रहीतव्यः भवेत्' इत्येवं बहुधा चिन्तयन् धर्मराजः रात्रौ अपि निद्रां न प्राप्नोति स्म ।

पाण्डवाः यदा काम्यकवने आसन् तदा कदाचित् व्यासः तत्र आगतवान् । पाण्डवानां दुःस्थितिं दृष्ट्वा सः नितरां खिन्नः जातः । सः पाण्डवान् उत्साहवर्धकानि वचनानि उक्त्वा - "त्रयोदशवर्षात्मकं वनवासं यथानियमं समाप्य भवन्तः पुनरपि राज्यं प्राप्स्यन्ति एव" इति उक्त्वा आशिषा अनुगृह्य ततः गतवान् ।

एवं पाण्डवाः अरण्ये सञ्चरन्तः यदा कष्टम् अनुभवन्तः आसन् तदा दुर्योधन-कर्ण-शकुनिप्रभृतयः चिन्तयन्तः आसन् यत् किं कृतं चेत् पाण्डवाः कष्टगर्ते पतेयुः इति ।

एतस्मिन् एव अवसरे महर्षिः दूर्वासाः दशसहस्रशिष्यैः सह हस्तिनापुरम् आगतवान् । दूर्वासाः महाकोपशीलः । अतिथिसत्कारे अल्पः लोपः भवति चेदपि कुपितः भवति स्म सः । शापम् अपि ददाति स्म । अतः दुर्योधनः तदनुजाः च दूर्वाससः सत्कारविषये विशेषास्थां प्रदर्शयन्तः



भक्त्या श्रद्धया च तस्य सेवां कुर्वन्तः विनयेन नम्रतया च व्यवहृतवन्तः ।

दूर्वासाः बहुधा दुर्योधनस्य परीक्षां करोति स्म । "राजन् ! वयं नितरां बुभुक्षिताः स्मः । शीघ्रं भोजनव्यवस्थां कारयतु । वयं स्नानं कृत्वा आगमिष्यामः" इति उक्त्वा नदीं गतः सः दीर्घकालस्य अनन्तरं प्रत्यागत्य 'बुभुक्षा नास्ति अस्माकम्' इति वदति स्म ।

कदाचित् मध्यरात्रे उत्थाय 'वयं बुभुक्षिताः स्मः' इति वदति स्म । भोजनं परिविष्टं चेत् 'बुभुक्षा नास्ति' इति वदति स्म । पुनः कदाचित् - 'हन्त ! कीदृशं भोजनम् एतत् !' इति उक्त्वा भोजनं मध्ये एव परित्यज्य उत्थाय गच्छति स्म । एवं बहुधा पीड्यमानः अपि दुर्योधनः सहनया

व्यवहरन् दूर्वाससः सेवां कृतवान् । तस्मात् सन्तुष्टः दूर्वासाः - "राजन् ! भवतः परिचर्यया अहं सन्तुष्टः अस्मि । अपेक्षितं वरं याचतु भवान्" इति उक्तवान् ।

दूर्वासाः असन्तुष्टः सन् शापं न दत्तवान् यत् ततः नितरां सन्तुष्टः दुर्योधनः शकुनि-कर्ण-दुश्शासनादिभिः समालोच्य दूर्वाससम् उद्दिश्य - "श्रीमन् ! परम-सात्त्विकः धर्मराजः अरण्ये अस्ति । तेन सह तदीयाः सहोदराः, पत्नी, अनेके ब्राह्मणाः च सन्ति । तेभ्यः सर्वेभ्यः भोजनं दत्त्वा स्वयं च भुक्त्वा द्रौपदी यदा शयनं करिष्यति तदा भवता तत्र गत्वा आतिथ्यम् अभ्यर्थनीयम् । एषः एव मया याच्यमानः वरः" इति उक्तवान् ।

एतत् अङ्गीकृत्य दूर्वासाः शिष्यैः सह ततः प्रस्थाय काम्यकवनं प्राप्तवान् । एतत् ज्ञातवतः दुर्योधनस्य सन्तोषस्य पारः एव न आसीत् । "पाण्डवाः दूर्वाससः कोपस्य पात्रीभूताः सन्तः तदीयं शापं प्राप्य विनाशं प्राप्स्यन्ति । तदा अस्माकम् अभिलाषा पूरिता भविष्यति" इति दुर्योधनम् उक्तवान् कर्णः । एतत् श्रुत्वा शकुनि-दुश्शासनादयः अपि सन्तुष्टाः ।

काम्यकवने कदाचित् द्रौपदी पतीनां ब्राह्मणानां च भोजनस्य अनन्तरं स्वयम् अपि भुक्त्वा शयनं कृतवती आसीत् । तत्समये महर्षिः दूर्वासाः दशसहस्रशिष्यैः सह तत्र आगतवान् ।

धर्मराजः अनुजैः सह गत्वा तान् सर्वान् आदरेण स्वागतीकृतवान् । अर्घ्य-पाद्यादिभिः सत्कृत्य - "महात्मन् ! सशिष्यः भवान् अस्माकम् आतिथ्यं स्वीकुर्यात्" इति निवेदितवान् ।

'घोरारण्ये वसन् एषः धर्मराजः दशसहस्रशिष्यैः युक्तस्य मम सत्कारं कर्तुं शक्नुयात् वा न वा' इत्यपि अचिन्तयन् दूर्वासाः धर्मराजस्य आतिथ्यस्वीकार-प्रस्तावं सहर्षम् अङ्गीकृत्य स्नानार्थं शिष्यैः सह गङ्गानदीं गतवान् ।

'एतावतां जनानां कृते कथं वा भोजनव्यवस्था करणीया ?' इति समस्यां प्राप्तवती द्रौपदी । बहुधा चिन्तनानन्तरम् अपि मार्गान्तरम् अपश्यन्ती सा कृष्णं भक्त्या स्मृतवती ।

- (अनुवर्तते)



# र स वा र्ताः

## अतिमहत् क्रिस्मस्शुभाशयपत्रम्

केरलराज्यीया लेखा एस्. बाबुनामिका चित्रकलाध्यापिका स्वस्य विद्यालयस्य व्यवस्थापकमण्डल्यै एकं क्रिस्मस्-शुभाशयपत्रं प्रेषितवती आसीत् । 'पूर्ववर्षे मण्डल्या ये ११ जनाः उद्योगात् च्याविताः ते पुनः अपि उद्योगे नियोजनीयाः' इत्येतम् अंशं ज्ञापयितुं सा तत् शुभाशयपत्रं प्रेषितवती आसीत् । तस्य पत्रस्य वैशिष्ट्यं तावत् तदीये आकारे अस्ति । तत् १३३२ अङ्गुलदीर्घम् आसीत्, एकादश-अङ्गुलविस्तृतं च आसीत् । तस्य भारः ८७० ग्राम्मितः आसीत् । द्वादश दिनानि यावत् परिश्रमं कृत्वा तत् शुभाशयपत्रं सज्जीकृतवती आसीत् लेखा ।



## अतिदीर्घं केक्खाद्यम्

अरब्राष्ट्रसमवायस्य निर्मितेः २५तमं वर्षं रजतोत्सवत्वेन आचरन्तः केचन एकं केक्खाद्यं सज्जीकृतवन्तः आसन् । तस्य दैर्घ्यम् आसीत् २.५ कि.मी. मितम् । भारः ७४ टन्मितः आसीत् । २,००.००० जनाः एतत् खादितुम् अर्हन्ति इति निर्मातृभिः चिन्तितम् आसीत् । किन्तु ५०,००० जनानां कृते अपि तत् अपर्याप्तं जातम् । दुबाय्समुद्रतीरे औपचारिकतया तस्य कर्तनार्थं सम्मिलिताः जनाः महता उत्साहेन तस्य एकैकं खण्डं स्वीकृत्य गताः । अतः यत्र तत् निर्मितम् आसीत् तत् स्थलम् अल्पे एव काले रिक्तं जातम् आसीत् । केक्खाद्यस्य मध्ये तत्र तत्र सुवर्णनाणकानि, षण्णां मेर्सडिस्बेञ्कारयानानां कुञ्चिकाः च सन्ति इति या किंवदन्ती प्रसृता आसीत् तस्याः परिणामतः एवं जातम् आसीत् । वस्तुतः तत् केक्खाद्यं न अखण्डम्, अपि तु ५१७५ केक्खाद्यानां समूहः आसीत् । एतस्य निर्माणार्थं ३०,८०० कि.ग्रांमितानि फलानि, ७०० कि.ग्रांमितं खर्जूरम्, ८०० कि.ग्रांमितं पिष्टं, ३७,००० अण्डानि च उपयुक्तानि आसन् । टन्परिमाणेन घृतशर्करादयः अपि उपयुक्ताः आसन् । एतस्य निर्माणार्थं २८ उपाहारमन्दिरीयाः जनाः २५ दिनानि यावत् अहोरात्रं कार्यं कृतवन्तः आसन् ।

## मूल्याङ्कविक्रयणे विक्रमः

गते वर्षे अमेरिकादेशीयायाः प्रसिद्धनट्याः मर्लिन्मिन्रोवर्यायाः चित्रेण युक्तः मूल्याङ्कः विमोचितः । वर्षाभ्यन्तरे तच्चित्रयुक्ताः ४६,००० मूल्याङ्काः विक्रीताः । १९९३तमे वर्षे सुप्रसिद्धस्य पापगायकस्य एल्विस्प्रीस्लीगौरवार्थं कश्चन मूल्याङ्कः विमोचितः आसीत् । वर्षत्रयाभ्यन्तरे तस्य १२,०००,००० प्रतिकृतयः विक्रीताः सन्ति । मूल्याङ्कविक्रयणक्षेत्रे उल्लेखनीयः विक्रमः अस्ति एषः ।





# भव्यं प्राचीनदुर्गम्

अस्माकं राजधान्याः देहलीनगरस्य मध्यभागे इन्द्रप्रस्थम् अस्ति, यच्च पाण्डवानाम् निवासस्थानम् आसीत् । तत्रैव एतत् प्राचीनदुर्गम् अस्ति । प्रायशः १५२२ तमे वर्षे द्वितीयमोगल्चक्रवर्तिनः हुमायूनस्य काले 'दीनूपन्ना' इति एतस्य नाम आसीत् । एतस्य अनन्तरं षेर्शह सूरी राजा अभवत् । सः प्रासादं परितः उन्नतभित्तिं निर्माय तां परितः पूर्वतनं देहलीनगरं विस्तारितवान् । १५४०-४५ तमवर्षयोः मध्यकाले षेरशहः एतत् दुर्गं बलिष्ठं कृत्वा 'षेर्घर्' इति नाम्ना निर्दिष्टवान् । सः १५४१ तमे वर्षे 'खिला-इ-कुन्वा'नामकं धर्ममन्दिरं निर्मितवान् । चतुरस्राकारेण स्थितस्य एतस्य दुर्गस्य अन्तः 'तलीखी दर्वाजा'नामकं द्वारम् अतिक्रम्य एव गन्तव्यम् । एतस्याः उन्नतायाः दुर्गभित्तेः पुरतः कश्चित् सुन्दरः मृगालयः अस्ति । तस्मिन् विविधाः विचित्रमृगाः सन्ति । दुर्गस्य अन्तः प्राचीनेतिहाससंशोधन-विभागीयाः यदा उत्खननं कृतवन्तः तदा शिलाखण्डस्य शिल्पानि पाकोप-करणानि च लब्धानि । एतेन एतस्य स्थलस्य २००० वर्षाणां सांस्कृतिकः इतिहासः अस्ति इत्येतत् दृढीकृतम् अभवत् ।



# जैगीषव्यः

सुन्दरे अरण्यप्रदेशे कस्यचित् पर्वतस्य उपत्यकायां देवलः नाम ऋषिः आश्रमं निर्माय शिष्यैः सह निवसति स्म । एकस्मिन् दिने तस्य आश्रमं प्रति 'जैगीषव्य'ऋषिः अतिथिरूपेण आगतवान् ।

देवलः तस्य शिष्याः च भयेन भक्त्या च मुनेः सेवार्थं सिद्धाः अभवन् । परन्तु सेवां कर्तुम् अवकाशाः एव तैः न प्राप्ताः । यतः सर्वदा सः मुनिः प्रशान्तः सन् निरपेक्षः भवति स्म ।

एकस्मिन् दिने जैगीषव्यः यदा ध्यानार्थम् उपविष्टवान् तदा एव देवलः समुद्रस्नानार्थं गतवान् । यावत् देवलः समुद्रसमीपं न गतवान् ततः पूर्वम् एव स्नानं समाप्य समुद्रतः बहिः आगच्छन् जैगीषव्यः तेन दृष्टः । तं दृष्ट्वा 'प्रायः जैगीषव्यः समीपतरं मार्गं जानीयात्' इति देवलः चिन्तितवान् । देवलः स्नानं समाप्य आश्रमम् आगत्य दृष्टवान् । तत्र जैगीषव्यः यथापूर्वं नेत्रे निमील्य ध्याने मग्नः आसीत् । अनन्तरदिने देवलः यदा कस्यचित् अन्यऋषेः आश्रमं गतवान् तदा तत्रापि जैगीषव्यः दृष्टः । तथैव एकदा नदीतीरे अपि सः दृष्टः । अनन्तरदिनेषु देवलः यत्रकुत्रापि गत्वा यदा जैगीषव्यं स्मरति स्म तदा तत्रैव सः दृश्यते स्म । एतादृशः विचित्रः अनुभवः बहुधा अभवत् देवलस्य ।

आश्चर्यम् अनुभवन् देवलः कुतूहलं निरोद्धुम् अशक्नुवन् एकस्मिन् दिने जैगीषव्यं स्वस्य अनुभवं निवेद्य - ''एतस्य रहस्यं किम् ?'' इति पृष्टवान् । परन्तु जैगीषव्यः - ''एतत् किमपि अहं न जानामि'' इति उक्तवान् ।

तदनन्तरं देवलः अनेकान् मुनिपुङ्गवान् दृष्ट्वा स्वस्य अनुभवं सन्देहं च निवेदितवान् । अन्ते कश्चित् महामुनिः तम् एवम् उक्तवान् - ''चराचर-ब्रह्माण्डं सर्वं ब्रह्मणा व्याप्तम् अस्ति । प्रतिस्थलं प्रतिवस्तु अपि ब्रह्मांशेन युक्तं भवति । ब्रह्मणः अतिरिक्तं किमपि नास्ति लोके । जैगीषव्यः सर्वेन्द्रियाणि जितवान् अस्ति । एकाग्रचित्ततया सततध्यानं कुर्वन् सः परब्रह्मस्वरूपे एव लीनः जातः अस्ति । एतत् ब्रह्माण्डम् एव ब्रह्ममयं खलु ? अतः भवान् यत्र स्मरति तत्र जैगीषव्यस्य दर्शनं भवति'' इति ।



# भवन्तः जानन्ति वा ?

## विलक्षणं नूतनवर्षचरणम्

स्विट्सर्ल्यांड्मध्ये कश्चित् लघुग्रामः यूमाष् । अत्र प्रतिवर्षम् अपि जनाः जनवरीमासस्य १३ दिनाङ्के नूतनवर्ष-समारम्भम् आचरन्ति । तस्मिन् दिने जनाः वृक्षवेषधारिणः सन्तः गृहं गृहं गत्वा शुभाशयान् वदन्ति । तत्काले शैवालेन तृणेन शम्बूक-शुक्तिभिः च सज्जीकृतं वस्त्रं केचन धरन्ति । पुनः केचन तृण-पर्ण-त्वक्-प्रभृतिभिः कृतानि वस्त्राणि धरन्ति ।



# इन्द्रधनुः



## सुगन्धप्रसारिकाः गन्धवर्तिकाः

एका गन्धवर्तिका ज्वालिता चेत् समग्रं गृहं सुगन्धभरितं भवति । देवचित्राणां विग्रहाणां च पुरतः गन्धवर्तिकाः ज्वाल्यन्ते । पूजासु एतासां उपयोगः अधिकः । अस्माकं देशे सामान्यतः ४,९८,००० कुटुम्बीयैः निर्मिताः ७१० कोटिमूल्यकाः गन्धवर्तिकाः प्रतिवर्षं विक्रीताः भवन्ति । पूर्वं श्रीगन्ध-पाटलपुष्प-मल्लिका-पुष्पादीनाम् उपयोगेन गन्धवर्तिकाः निर्मीयन्ते स्म । एतेषु दिनेषु 'मचिलास्मकरन्द' वृक्षस्य सारेण गन्धवर्तिकाः निर्मीयन्ते । इदानीं युरोपखण्डे सुगन्धद्रव्याणां विक्रयणम् आधिक्येन प्रचलति । एतादृशानां नवीनसुगन्ध-द्रव्याणाम् उत्पादने फ्रान्स् प्रथमस्थाने अस्ति ।



# आरोग्यरहस्यम्

कदाचित् गुरुराजस्य पीनसः अभवत् । कण्ठः अपि अवरुद्धः । सम्यक् वक्तुमपि सः अशक्तः जातः । शिरोवेदना अपि आसीत् तस्य । तदा तदा शिरः दृढं गृह्णाति स्म सः । भोजनं तु सम्यक् करोति स्म । परन्तु ज्वरशङ्का तं बाधते स्म ।

एतां पीडां सोढुम् अशक्तः सः स्वपुत्रं वैद्यस्य समीपं प्रेषितवान् । वैद्यः काश्चन गुलिकाः दत्त्वा प्रेषितवान् । तासां सेवनात् ज्वरः न्यूनः जातः चेदपि अन्यपीडाः न्यूनाः न जाताः ।

''वैद्यं किम् उक्तवान् भवान् ? औषधसेवनानन्तरम् अपि ज्वरमात्रं न्यूनं जातम् । अन्यपीडाः यथापूर्वं सन्ति एव'' इति तर्जनस्वरेण पुत्रम् उक्तवान् गुरुराजः ।

''भवतः पीनसः इत्येव उक्तवान् आसं तात !'' इति उत्तरं दत्तवान् पुत्रः ।

''तथापि सः ज्वरमात्रस्य औषधं दत्तवान् इति मन्ये । अतः भवान् पुनरपि गत्वा मम सर्वाः पीडाः उक्त्वा औषधम् आनयतु'' इति पुत्रम् आदिष्टवान् गुरुराजः ।

पुत्रः पुनः वैद्यसमीपं गत्वा पितुः पीडानां विवरणम् उक्तवान् । तदा वैद्यः - ''पीनसकाले तादृश्यः पिडाः भवन्ति एव । अतः औषधान्तरस्य आवश्यकता नास्ति तस्य'' इति उक्त्वा गुरुराजपुत्रं प्रेषितवान् । पुत्रः प्रवृत्तं सर्वं पितरम् उक्तवान् ।

''वैद्यस्य यदा कार्यम् अधिकं भवति तदा कोपः अधिकः भवति । तत्रापि बालाः गच्छन्ति चेत् सः उपेक्षां कुर्यात् एव । यदि उत्तमौषधम् आवश्यकं तर्हि स्वयं गत्वा आगमनमेव वरम्'' इति विचिन्त्य गुरुराजः सायङ्काले यदा आतपः न्यूनः जातः तदा स्वयं वैद्यं द्रष्टुं प्रस्थितः । मार्गे सः दशवारं क्षुतं कृतवान् । पञ्चविंशतिवारं यावत् कासः आगतः ।

मार्गे बहु जनाः तं विचार्य तस्य अवस्थां ज्ञात्वा करुणां प्रदर्शितवन्तः । अन्ते सः यदा वैद्यस्य समीपं गतवान् तदा वैद्यः- ''हन्त ! भवानेव आगतः !'' इति वदन् गौरवेण तं स्वागतीकृत्य रोगलक्षणानि सर्वाणि ततः ज्ञात्वा काश्चन गुलिकाः दत्त्वा उक्तवान् - ''सप्ताहं यावत् सम्यक् भोजनं कुर्वन् भवान् विश्रान्तिं स्वीकरोतु । भोजनं विश्रान्तिः चापि रोगोपशमने उपकारं कुरुतः'' इति उक्तवान् ।



नूतनौषधेन अपि पीडा न गता । स्वयं कष्टम् अनुभवन् अन्येभ्यः अपि कष्टं यच्छन् गुरुराजः दिनानि यापयन् सप्ताहानन्तरं स्वस्थः जातः ।

यदा पीनसः अपगतः तदा एव वाटिकायां स्खलनकारणात् सः पतितवान् । जङ्घायां वेदना आरब्धा । गृहजनाः बहु शुश्रूषां कृतवन्तः । वैद्याः आगत्य दृष्टवन्तः । ग्रामस्य जनाः सर्वे अनुकम्पां प्रदर्शितवन्तः ।

ततः सप्ताहाभ्यन्तरे गुरुराजस्य कर्णवेदना आरब्धा । एतेन सः दिनत्रयम् अस्वस्थताम् अनुभूतवान् । अनन्तरम् उदरवेदना आरब्धा । दिनद्वयं वेदना आसीत् । ततः वक्षःस्थले वेदना आरब्धा । वैद्यः हृदयस्य परीक्षां कृत्वा - ''चिन्ता करणीया नास्ति । उदरे वायुदोषकारणात् एवं सञ्जातम्'' इति उक्त्वा सर्वेषां मनसः चिन्तां दूरीकृतवान् ।

एवम् एकस्मिन् वर्षे एव बहुवारं व्याधिग्रस्तः जातः गुरुराजः । ग्रामस्य सर्वे जनाः सहानुभूतिं प्रदर्शितवन्तः । एषा वार्ता सर्वैः बन्धुभिः अपि ज्ञाता । तस्य देवरः बसवराजः विषयं ज्ञात्वा तं द्रष्टुम् आगतवान् । गुरुराजः स्ववेदनाः सर्वाः निवेद्य - ''अहं वृद्धः भवन् अस्मि इति भाति । मम आरोग्यं दिने दिने क्षीयमाणम् अस्ति'' इति उक्तवान् ।

''किमर्थं तथा वदति भवान् ? भवतः वयः अधिकं नैव । इतोऽपि पञ्चाशत् वर्षाणि अपि न अतीतानि । येषां पञ्चषष्ठिवर्षाणि अभवन् ते अपि दृढाः सन्ति । विना कारणं भयं मास्तु'' इति उत्साहपूर्णवचनानि उक्तवान् बसवराजः ।

''भयं मास्तु इति भवान् वदति चेत् परिस्थितिः परिवर्तते किम् ? वेदना तु मया अनुभूयते, न भवता । सर्वमपि विना वचनम् अनुभोक्तव्यं, तावदेव'' इति



एतावत्पर्यन्तं अहं केनचित् अपि व्याधिना न पीडितः'' इति उक्तवान् बसवराजः ।

''भवान् यान् नियमान् पालयति तान् सर्वानपि अहमपि पालयामि । तथापि अहं किमर्थं बहुभिः रोगैः पीडितः अस्मि ?'' इति पृष्टवान् गुरुराजः ।

क्षणमेकं तूष्णीं स्थित्वा बसवराजः - ''मम तु भाति यत् कांश्चन नियमान् भवान् पालयन् नास्ति इति । मया उक्तेषु नियमेषु कं नियमं भवान् पालयन् नास्ति इति विचिन्त्य जानातु । ततः भवतः एव हितं सिद्धं भविष्यति'' इति उक्तवान् ।

बहुधा चिन्तनस्य अनन्तरम् अपि नियमलोपं कमपि अजानन् गुरुराजः उक्तवान् - ''मया किमपि न ज्ञातम् । भवान् एव वदतु'' इति ।

''मत्तः अपि ज्येष्ठः भवान् । भवति दोषान्वेषणं युक्तं न । अतः अन्यं कमपि पृष्ट्वा जानातु'' इति उक्तवान् बसवराजः ।

गुरुराजः पत्नीं पृष्टवान् । पत्नौ लोपान् वक्तुं सा सिद्धा न जाता । ततः गुरुराजः पुत्रं पृष्टवान् । पुत्रः अपि वक्तुं भयम् अनुभूतवान् । सः अन्यजनान् यदा पृष्टवान् तदा ते - ''स्वामिन् ! भवता दर्शिते मार्गे स्मः इति कारणतः एव वयम् अद्यापि स्वस्थाः स्मः । एतादृशाः वयं भवतः जीवने कथं वा लोपं द्रष्टुं शक्नुयाम ?'' इति उक्तवन्तः । एवं कुतश्चित् अपि तृप्तिकरम् उत्तरं न प्राप्तवान् गुरुराजः ।

एतत् सर्वं दृष्ट्वा बसवराजः - ''एतत् सर्वं प्रयोजनाय न भवति । यः भवतः अपेक्षया वयसि ज्येष्ठः, आरोग्यवान्, निश्चिन्तः च उक्तवान् गुरुराजः ।

''एवम् उपेक्षाभावः सर्वथा अनुचितः श्रीमन् ! अनारोग्यम् औषधमात्रेण न निर्गच्छति । तदर्थं जीवने आरोग्यसूत्राणि अपि पालनीयानि भवन्ति'' इति उक्तवान् बसवराजः ।

''भवता ज्ञातानि आरोग्यसूत्राणि वदतु तावत्'' इति उक्तवान् गुरुराजः ।

''अहं बहिः कमपि आहारं न स्पृशामि, गृहे अपि बहु न खादामि । यावदावश्यकं तावदेव खादामि । कदाचित् पर्वदिने यदि अधिकं खाद्यते तर्हि अनन्तरदिने उपवासं करोमि । प्रतिदिनमपि बहुदूरं पादाभ्यां चलामि । मम कार्याणि सर्वाणि अहमेव करोमि । एतानि सर्वाणि आरोग्यसूत्राणि इति मम भावना । एतेषां पालनात् एव

अस्ति तादृशं पृच्छति चेत् वास्तवविषयः ज्ञातुं शक्येत । आरोग्यवतां ज्येष्ठानां व्यवहारस्य अनुसरणम् एव वरम्'' इति सूचनां दत्तवान् ।

'तादृशः मनुष्यः कः इति अस्माकं ग्रामस्य वैद्यः एव जानीयात्' इति चिन्तयन् गुरुराजः वैद्यस्य समीपं गत्वा - ''एतस्मिन् ग्रामे सर्वेषाम् अपेक्षया अधिक-आरोग्यशाली जनः कः?'' इति पृष्टवान् ।

तदा वैद्यः उक्तवान् - ''एतस्मिन् ग्रामे शेषाचलस्य अपेक्षयां अधिकस्वास्थ्यवान् अन्यः नास्ति इति चिन्तयामि अहम् । सः एकवारमपि औषधार्थं मम समीपं न आगतवान्'' इति उक्तवान् ।

शेषाचलस्य वयः षष्ट्यधिकवर्षात्मकम् आसीत् । तथापि सः शिलाखण्डः इव आसीत् । कुत्रचित् गन्तव्यमस्ति चेदपि सः पद्भ्यामेव गच्छति स्म । कदापि पीनसः शैत्यमित्यादिकं तस्य मुखात् न श्रुतम् आसीत् । 'वैद्यस्य मुखात् तस्य नामश्रवणपर्यन्तमपि तम् अहं न स्मृतवान् एव किल' इति चिन्तयन् गुरुराजः अनुक्षणमेव तस्य गृहं गतवान् ।

तदा शेषाचलः गृहस्य पुरतः उपविष्टवान् आसीत् । तं परितः केचन ज्येष्ठाः अपि उपविष्टवन्तः आसन् । ''मम गृहस्य सङ्गीतगोष्ठीं प्रति भवान् किमर्थं न आगतवान् ? मम पत्नी बहु खेदम् अनुभूतवती'' इति उक्तवान् एकः ज्येष्ठः ।

''निश्चयेन आगतवान् स्याम् । परन्तु तस्मिन् दिने मम महान् कासः । सङ्गीतगोष्ठ्यां पुनः पुनः कासं करोमि चेत्



अन्येषां रसभङ्गः भवेत् इति कारणतः अहं न आगतवान् । मधु लेपयित्वा चत्वारि तुलसीपर्णानि खादितवान् । दिनद्वये कासः अपगतः'' इति वदन् शेषाचलः तस्य सान्त्वनं कृतवान् ।

''मम गृहे सम्पन्नं विवाहं प्रति न आगतवान् भवान्'' इति अन्यः एकः ज्येष्ठः उक्तवान् । ''तदा मम पीनसः आसीत् । विवाहे क्षुतं कुर्वन् उपवेष्टुम् अहं न इष्टवान्'' इति उक्त्वा - ''मरीचकषायात् पीनसः गतः'' इति उक्तवान् शेषाचलः ।

एवं सर्वान् अपि समाधानं वदन् शेषाचलः तैः सर्वैः अपि रोगैः पीडितः आसीत्, यैः रोगैः गुरुराजः पीडितः आसीत् । किन्तु सर्वस्य अपि औषधं गृहे एव कृत्वा परिहारं प्राप्तवान् आसीत् सः ।

सर्वेषां गमनानन्तरं शेषाचलः हसन् गुरुराजं दृष्ट्वा - ''भोः ! भवान् किमर्थम् अत्र आगतः ?'' इति पृष्टवान् ।

''भवतः चिरस्वास्थ्यस्य कारणं ज्ञातव्यम् इति अहम् अत्र आगतवान् । वस्तुतः अपि भवान् तैः रोगैः पीडितः आसीत्, उत आगतानां प्रेषणार्थं व्याजरूपेण किमपि उक्तवान् ?'' इति पृष्टवान् गुरुराजः ।

''विशिष्टसन्दर्भेषु व्याजरूपेण यत्किञ्चित् वदामः चेत् तत्र कोऽपि दोषः नास्ति । मम केऽपि रोगाः सन्ति वा इति पृच्छन् अस्ति खलु भवान् ? कदापि अहं रोगैः पीडितः नास्मि'' इति उक्तवान् शेषाचलः ।

''कासः इति उक्तवान् भवान् । पीनसः, कर्णवेदना, पादवेदना इत्यपि उक्तवान् । सर्वम् अहं स्वतः श्रुतवान् अस्मि । किन्तु इदानीं भवान् वदति मम कोऽपि रोगः न आसीत् इति । किमेतत् ?'' इति आश्चर्येण पृष्टवान् गुरुराजः ।

''शरीरमस्ति चेत् काश्चित् लघुपीडाः भवन्ति एव । ताः सर्वाः रोगपदेन निर्देष्टुं न शक्याः । रोगाः नाम क्षयः शीतला अर्बुदः इत्येतादृशाः'' इति उक्तवान् शेषाचलः ।

तदा गुरुराजः तं नमस्कृत्य - ''मम सन्देहः गतः । लघुपीडाः अनारोग्यत्वेन न परिगणयति एव भवान् । एतदेव भवतः आरोग्यस्य रहस्यम् । अहं ताः पर्वतीकृत्य भयम् अनुभवामि स्म । इदानीम् आत्मनः दोषः मया ज्ञातः'' इति उक्तवान् ।

''उत्तमम् । मम इदानीं किञ्चित् शिरोवेदना अस्ति । निद्रां किञ्चित् करोमि चेत् सा अपगता भविष्यति । अतः अन्तः गन्तुम् अर्हामि वा अहम् ?'' इति वदन् शेषाचलः गृहस्य अन्तः गन्तुम् उद्युक्तः । गुरुराजः शेषाचलस्य अनुज्ञां प्राप्य उत्साहेन गृहं प्रत्यागतवान् ।

अनन्तरदिनेषु अपि सः बहुवारं कास-दन्तवेदना-पीनसादिभिः रोगैः पीडितः अभवत् । परन्तु सः तं विषयं कमपि न उक्तवान् । गृहौषधसेवनेन एव रोगोपशमनं सम्पादितवान् । केभ्यश्चित् मासेभ्यः गुरुराजस्य मुखात् अनारोग्यवार्ताम् अश्रुत्वा जनाः भावितवन्तः यत् - एतेषु दिनेषु गुरुराजस्य आरोग्यम् उत्तमम् अस्ति इति ।





# नाणकात्मकम् ऋणम्

कस्मिंश्चित् ग्रामे रामः नाम कश्चन निर्धनः आसीत् । तस्य समीपे किञ्चित् ऊर्णम् आसीत् । 'ग्रामे एव विक्रयणं करोमि चेत् अधिकं धनं न लभ्येत । किन्तु एतावत् अल्पम् ऊर्णं विपणिं नयामि चेत् सर्वे हसेयुः' इति सः चिन्तितवान् । अतः सः एकस्मिन् स्यूते बहुविधानि पर्णानि पूरयित्वा ऊर्ध्वभागे ऊर्णं स्थापयित्वा विपणिं प्रति प्रस्थितवान् ।

एतादृशः एव सोमः नाम कश्चन युवकः अपि विपणिम् आगतवान् । तस्य स्यूते पादोनभागमितानि हरीतकीफलानि तेषाम् उपरि पूगीफलानि च आसन् ।

विपणेः अन्तः गन्तुं रामस्य धैर्यं न आसीत् । प्रवेशप्रदेशात् अनतिदूरे एव एकः वृक्षः आसीत् । रामः तस्य अधः उपविष्टवान् । सोमः अपि तत्रैव आगत्य उपविष्टवान् । उभौ अपि परस्परं वार्तालापं कृतवन्तौ । रामः स्वस्यूतात् ऊर्णं दर्शयन् 'उत्तमम् ऊर्णम्' इति उक्तवान् । सोमः अपि स्वस्यूतात् पूगफलं निष्कास्य प्रदर्शयन् - 'पश्यतु ! एकैकम् अपि निम्बुकम् इव अस्ति' इति उक्तवान् ।

''विपण्यां कोलाहले अस्मान् कोऽपि न परिगणयति, अतः आवां स्वस्य वस्तुनः विनिमयं करवाव चेत् कथम् ?'' इति पृष्टवान् सोमः ।

''ऊर्णस्य कृते पूगफलस्य विनिमयः !'' इति वदन् अपि रामः अन्तरङ्गे तु सन्तोषम् एव अनुभूतवान् ।

''पूगफलं तावत् सुवर्णमूल्यकम् । तथापि एतत् अतिरिच्य एकं नाणकम् अपि दास्यामि'' इति उक्तवान् सोमः । तदा रामः विनिमयप्रस्तावम् अङ्गीकृतवान् ।

अनन्तरम् उभौ अपि स्यूतस्य विनिमयं कृतवन्तौ ।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



''आगच्छामि'' इत्युक्त्वा सोमः ततः प्रस्थितवान् । तदा रामः - ''मह्यं नाणकं दत्त्वा गच्छतु'' इति उक्तवान् ।

तदा सोमः - '' ऋणम् इति चिन्तयतु । अहं कुत्रापि न गच्छामि । मम ग्रामः अत्रैव अस्ति । अहम् आगमनसमये धनं न आनीतवान् आसम्'' इति उक्तवान् ।

'अन्यथा गतिर्नास्ति' इति चिन्तयन् रामः 'एकं नाणकं दास्यामि एव' इति सोमद्वारा सशपथं वाचयित्वा स्वग्रामं गतवान् । ग्रामं प्राप्य उभौ अपि अवगतवन्तौ यत् 'आवाम् उभौ अपि परस्परं वञ्चितौ जातौ' इति । 'सोमात् नाणकं वा स्वीकृत्य आगच्छामि' इति चिन्तयन् रामः सोमस्य ग्रामं गतवान् ।

सोमः तस्य ग्रामस्य धनिकस्य गृहे दास्यं कुर्वन् आसीत् । सः रामं दृष्ट्वा - ''माम् एव वञ्चितवान् खलु भवान् ।'' इति रोषेण उक्तवान् ।

''भवान् अपि मां वञ्चितवान् एव'' इति उक्तवान् रामः ।

''तर्हि कृतस्य प्रतीकारः कृतः अभवत्'' इति सोमः उक्तावान् ।

''तत्सर्वं भवतु नाम, नाणकात्मकम् ऋणं भवता प्रत्यर्पणीयं खलु अस्ति ? तत् इदानीं प्रत्यर्पयतु तावत्'' इति उक्तवान् रामः ।

''मम समीपे किञ्चित् अपि धनं नास्ति । अतः धनं दातुं तु न शक्नोमि । परन्तु आवयोः कृते लाभः यथा भवेत् तथा एकम् उपायं वदामि, श्रृणोतु । एतस्य गृहस्य पृष्ठभागे एकः कूपः अस्ति । एकवारं मम स्वामी कूपे निश्रेणीं स्थापयित्वा अवतरन् दृष्टः आसीत् मया । कूपे धनादिकं किमपि स्यात् कदाचित् । भवान् साहाय्यं करोति चेत्, कूपे किम् अस्ति इति ज्ञात्वा ततः तत् स्वीकृत्य आवां द्वौ अपि विभज्य स्वीकरवाव । साहाय्यं करोति वा भवान् ?'' पृष्टवान् सोमः ।

रामः क्षणकालं यावत् चिन्तयित्वा सोमस्य प्रस्तावम् अङ्गीकृतवान् ।

तस्मिन् दिने एव रात्रौ सोमः एकं गोणीस्यूतं रज्जुं च आनीतवान् । ततः उभौ अपि वाटिकां प्रविष्टवन्तौ । रामः रज्जुं गृहीतवान् । सोमः स्यूतेन सह कूपं प्रविष्टवान् । कूपे बहुधा अन्वेषणं कृतं चेत् अपि किमपि न लब्धम् ।

'एषः रामः महान् वञ्चकः अस्ति । किमपि नास्ति इति वदामि चेत्, रज्जुं

त्यक्त्वा गच्छेत् । अतः युक्त्या एव उपरि गन्तव्यम्' इति चिन्तयित्वा सोमः स्यूते स्वयम् उपविश्य स्यूतं रज्जौ योजयित्वा - "अत्र विद्यमानं सर्वं स्यूते स्थापयित्वा बद्धवान् अस्मि । स्यूतम् उपरि स्वीकरोतु । पुनः रज्जुम् अधः प्रेषयतु । अहम् उपरि आगच्छामि" इति उच्चैः उक्तवान् । रामः उत्साहेन स्यूतम् उपरि स्वीकृतवान् ।

'एषः सोमः विश्वासार्हः न । किमर्थम् एतस्मै भागः दातव्यः ? सः कूपे एव भवतु' इति चिन्तयित्वा स्यूतं स्वीकृत्य स्वग्रामं प्रति प्रस्थितवान् रामः । तस्मिन् स्यूते सोमः अस्ति इति सः न जानाति स्म ।

किञ्चिद्दूरं यदा गतं तदा स्यूतस्य भारः वोढुम् अशक्यः जातः । अतः रामः स्यूतम् अधः स्थापितवान् । तत्क्षणे एव सोमः स्यूतात् बहिः आगतवान् ।

"हे वञ्चक ! मां पुनः वञ्चितवान् वा ?" इति उक्तवान् रामः ।

"भवता किं वा कृतम्, ऋते वञ्चनातः ? सर्वं स्वायत्तीकरणीम् इति चिन्तयन् आसीत् खलु भवान् ? अतः मया एवं कृतम्" इति उक्तवान् सोमः ।

"हुँ, किं प्रवृत्तस्य विषये चर्चया ? भवता नाणकमितम् ऋणं प्रत्यर्पणीयम् अस्ति । प्रत्यर्पणं सशपथम् अङ्गीकृतम् अस्ति अपि" इति उक्तवान् रामः ।

"न प्रत्यर्पयामि इति अहं न उक्तवान् खलु ? यदा मम समीपे धनं भविष्यति, तदा भवता आगत्य स्वीकरणीयम्" इति उक्त्वा ततः निर्गतवान् सोमः ।

गच्छता कालेन सोमस्य विवाहः



अभवत् । पत्नी किञ्चित् धनम् अपि आनीतवती । सोमः दास्यात् विमुक्तः सन् किञ्चित् भूमिं क्रीत्वा कृषिम् आरब्धवान् । तस्मात् लाभः अपि अभवत् । तेन धनेन एकं गृहम् अपि निर्मितवान् सः ।

रामः यथापूर्वं कष्टेन कार्यं कुर्वन् जीवनं यापयन् आसीत् । अथ कदाचित् रामः सोमेन दातव्यम् ऋणं स्मृतवान् । 'तस्मात् इदानीं वा ऋणं प्रतिस्वीकरणीयम्' इति निर्णीय रामः सोमस्य ग्रामं गतवान् ।

सोमः दूरात् एव रामस्य आगमनं दृष्ट्वा गृहस्य अन्तः गत्वा पत्नीम् उद्दिश्य - "भद्रे ! रामः ऋणं प्रतिस्वीकर्तुम् आगच्छन् अस्ति । अहं मृतवान् इव अभिनयन् शयनं करोमि । भवती रोदनं कुर्वती उपविशतु" इति सूचितवान् ।



सोमस्य पत्नी तथैव कृतवती । रामः आगत्य सर्वं दृष्टवान् ।

''इतःपरं सोमः भवतः ऋणं कथं प्रत्यर्पयेत् ? सोमस्य इहलोकव्यवहारः एव समाप्तः अभवत्'' इति वदन्ती सोमस्य पत्नी रोदनम् अनुवर्तितवती ।

''भगिनि, अलं दुःखेन । सोमस्य उत्तरक्रियादिकं समाप्य एव अहं गृहं गमिष्यामि । मित्रस्य निमित्तम् एतावत् वा करणीयं खलु मया'' इति उक्तवान् रामः ।

रामः गृहस्य पुरतः स्थित्वा मार्गे गमनागमनं कुर्वतां जनानां द्वारा शववाहकानां कृते वार्तां प्रेषितवान् । शववाहकाः अपि आगतवन्तः ।

''बन्धूनाम् आगमनपर्यन्तं शवः नेतुं न शक्यः'' इति उक्तवती सोमस्य पत्नी ।

सूर्यास्तः अभवत् । रामः न प्रतिगतवान् । प्रतिवेशिनः आगत्य -''शवं गृहे स्थापयित्वा भोजनं कर्तुं न शक्यते । अतः शवं ग्रामसीमास्थे पुरातनदेवालये स्थापयन्तु'' इति सूचितवन्तः ।

''प्रातःकालपर्यन्तं मया एकया एव जीर्णदेवालये स्थातुं न शक्यते'' इति उक्तवती सोमस्य पत्नी ।

''भवत्याः चिन्ता एव मास्तु । अहम् अस्मि । मम मित्रस्य शवम् अहं रक्षिष्यामि'' इति उक्तवान् रामः ।

सोमस्य पत्नी अन्तः गत्वा रहस्येन -''इदानीं किं करणीयम् ?'' इति सोमं पृष्टवती मन्दस्वरेण ।

''सः मां नयतु नाम । भयं किमपि नास्ति'' इति सोमः उक्तवान् । सोमं शववाहकाः देवालयं प्रापय्य गतवन्तः । रामः शवस्य रक्षणार्थं स्थितवान् ।

मध्यरात्रे देवालयात् बहिः कोलाहलः श्रुतः । रामः शीघ्रम् अन्तः गत्वा निलीय स्थितवान् । किञ्चित्समयानन्तरं चत्वारः चोराः अन्तः प्रविष्टवन्तः । आनीतानि सुवर्णादीनि चतुर्धा विभक्तानि तैः । तैः एकः खड्गः अपि आनीतः आसीत् ।

''एतं खड्गं कः स्वीकरोति ?'' इति चोराणां स्वामी पृष्टवान् ।

अन्ये चोराः - ''एतेन कार्यं कर्तुं न शक्यते'' इति उक्तवन्तः ।

''नैव । एषः खड्गः उत्तमः एव अस्ति । पश्यन्तु । एतं शवम् एकेन एव प्रहारेण द्विधा खण्डीकृत्य एतस्य तीक्ष्णतां प्रमाणीकरिष्यामि'' इति वदन् खड्गं गृहीत्वा

सोमस्य समीपं गतवान् चोरनायकः ।

तत्क्षणे एव सोमः उत्थाय - ''भोः ! वराकाः ! भवन्तः किमर्थम् अत्र आगतवन्तः ?'' इति उच्चैः आक्रोशं कृतवान् । एतत् श्रुत्वा सर्वे चोराः भयेन धावितवन्तः । सोमस्य रहस्यं ज्ञात्वा रामः अन्तर्भागतः बहिः आगतवान् ।

''दृष्टं खलु सर्वम् अपि ? अस्माकं कार्यसिद्धिः अभवत् । उभौ अपि एतत् धनं विभज्य स्वीकरवाव'' इति उक्तवान् सोमः । ततः तौ चोरैः आनीतं सर्वं विभज्य स्वीकृतवन्तौ ।

''अन्यत् सर्वं सम्यक् प्रवृत्तम् । परन्तु भवता एकनाणकात्मकम् ऋणं प्रतिदातव्यम् अस्ति खलु !'' इति उक्तवान् रामः । ततः द्वयोर्मध्ये कलहः आरब्धः ।

तावति काले चोराः धावन्तः किञ्चिद्दूरं गत्वा स्थितवन्तः आसन् । तत्र चोराणां स्वामी - ''अद्य वयं सर्वे मूर्खाः अभवाम । वयं भयेन तावत् ऐश्वर्यं त्यक्त्वा आगतवन्तः । कोऽपि देवालयं गत्वा दृष्ट्वा आगच्छति चेत् वरम्'' इति उक्तवान् ।

अन्ये त्रयः अपि देवालयं प्रति गमनं निराकृतवन्तः । अन्ततो गत्वा चोरस्वामी एव तत्र गतवान् । देवालयस्य समीपम् आगत्य दूरात् एव सः सर्वम् अवलोकितवान् । अन्तः रामः सोमः च कलहं कुर्वन्तौ आस्ताम् । ''मया नाणकं न प्राप्तम्?'' इति रामः वदन् आसीत् । ''भवता एतावता तत् प्राप्तम् एव खलु ?'' इति सोमः वदन् आसीत् ।

तयोः वचनानि श्रुत्वा चोराणां स्वामिनः शरीरं भयेन कम्पमानं जातम् । सः अन्येषां समीपं गत्वा - ''अहो, तस्मिन् देवालये कति पिशाचाः सन्ति इति न ज्ञायते । एकैकेन अपि एकैकं नाणकं स्वीकृतम् अस्ति इति मन्ये । कैश्चित् एकं नाणकम् अपि न प्राप्तम् इति भाति । अद्य अस्माकं ग्रहगतिः सम्यक् नास्ति । गच्छाम तावत्'' इति उक्तवान् । सर्वे ततः पलायितवन्तः ।

कलहायमानौ रामः सोमः च एकं सन्धिम् अङ्गीकृतवन्तौ । तदनुगुणं रामः खड्गं स्वीकृतवान् । सोमेन ऋणं प्रत्यर्पणीयं नास्ति इति निर्णीतम् । रामः गृहम् आगत्य धनेन भूमिं क्रीतवान् । एकां सुन्दरीं तरुणीं परिणीय सुखेन जीवितवान् च ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां जुलै - १९९७ मासे प्रकटयिष्यामः ।


MAHANTESH C. MORABAD


MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

'मार्च्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **दुग्धपानकाले किं नृत्यसि बाले ?**

द्वितीयचित्रम् - **नृत्य इह तावत् चित्रग्रहणकाले ।**

प्रेषकः - राजेन्द्रः, शीबळमने, पो - वाजगोडु, ता - सिद्दापुर - ५८१ ३२२ (उ.क. कर्णाटकम्)




Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras - 600 026 (India), Controlling Editor: NAGI REDDI.

